# श्रीगौराङ्गलीला-स्मरणमङ्गलस्तोत्रम् ।

राहुग्रस्ते जडशशधरे फाल्गुने पूर्णिमायां
गौडे शाके मनुशतमिते सप्तवर्षाधिके यः ।
मायापुर्यां समजनि शचीगर्भसिन्धौ प्रदोषे
तं चिच्छक्तिप्रकटित-तनुं मिश्रसूनुं स्मरामि ॥ १ ॥

विश्वंभर-प्रभु-हरि-द्विज-गौरचन्द्र-
निम्बेश-नामनिचयः क्रमतो बभूव ।
यस्यार्यखण्डमुकुटोपमगौडराष्ट्रे
गौरं स्मरामि सततं कलिपावनं तम् ॥ २ ॥

अङ्गीकुर्वन्निजसुखकरीं राधिकाभावकान्तिं
मिश्रावासे सुललितवपुर्गौरवर्णो हरिर्यः ।
पल्लीस्त्रीणां सुखमभिदधत् खेलयामास बाल्ये
वन्देऽहं तं कनकवपुषं प्राङ्गणे रिङ्गमाणम् ॥ ३ ॥

सर्पाकृतिं स्वाङ्गनगं ह्यनन्तं
कृत्वासनं यस्तरसोपविष्टः ।
तत्याज तञ्चात्मजनानुरोधाद्
विश्वंभरं तं प्रणमामि नित्यम् ॥ ४ ॥

बाल्ये शृण्वन् वद हरिमिति क्रन्दनाद् यो निवृत्त-
स्तस्मात् स्त्रीणां सकलविषये नामगानं तदासीत् ।
मात्रे ज्ञानं विशदमवदन्मृत्तिकाभक्षणे यो
वन्दे गौरं कलिमलहरं नामगानाश्रयं तम् ॥ ५ ॥

पौगण्डादौ द्विजगणगृहे चापलं यो वितन्वन्
विद्यारम्भे शिशुपरिवृतो जाह्नवीस्नानकाले ।

वारिक्षेपैर्द्विजकुलपतीन् चालयामास सर्वां-
स्तं गौरांगं परमचपलं कौतुकीशं स्मरामि ॥ ६ ॥

तीर्थभ्रामिद्विजकुलमणेर्भक्षयन् पक्वमन्नं
पश्चात्तं यो विपुलकृपया ज्ञापयामास तत्त्वम् ।
स्कन्धारोहच्छलबहुतया मोहयामास चौरौ
वन्देऽहं तं सुजनसुखदं दण्डदं दुर्जनानाम् ॥ ७ ॥

आरुह्य पृष्ठं शिवभक्तभिक्षोः
संकीर्त्य रुद्रस्य गुणानुवादम् ।
रेमे महानन्दमयो य ईश-
स्तं भक्तभक्तं प्रणमामि गौरम् ॥ ८ ॥

लक्ष्मीदेव्याः प्रणयविहितं मिष्टमन्नं गृहीत्वा
तस्यै प्रादाद् वरमतिशुभं चित्तसन्तोषणं यः ।
मस्याश्चिह्नैर्निजपरिजनान् तोषयामास यश्च
तं गौराङ्गं परमरसिकं चित्तचौरं स्मरामि ॥ ९ ॥

उच्छिष्टभाण्डेषु वसन् वराङ्गो
मात्रे ददौ ज्ञानमनुत्तमं यः ।
अद्वैतवीथीपथिकैरुपास्यं
तं गौरचन्द्रं प्रणमामि नित्यम् ॥१०॥

दृष्ट्वातु मातुः कदनं स्वलोष्ट्रै-
स्तस्यै ददौ द्वे सितनारिकेले ।
वात्सल्यभक्त्या सहसा शिशुर्य-
स्तं मातृभक्तं प्रणमामि गौरम् ॥११॥

संन्यासार्थं गतवति गृहादग्रजे विश्वरूपे
मिष्टालापैर्व्यथितजनकं तोषयामास तूर्णम् ।
मातुः शोकं पितरि विगते सान्त्वयामास यश्च
तं गौराङ्गं परमसुखदं मातृभक्तं स्मरामि ॥१२॥

लक्ष्मीदेवीं प्रणयविधिना वल्लभाचार्यकन्या-
मङ्गीकुर्वन् गृहमखपरः पूर्वदेशं जगाम ।
विद्यालापैर्बहुधनमथो प्राप यः शास्त्रवृत्ति-
स्तं गौराङ्गं गृहपतिवरं धर्ममूर्तिं स्मरामि ॥१३॥

वाराणस्यां सुजनतपनं संगमय्य स्वदेशं
लब्ध्वा लक्ष्मीविरहवशतः शोकतप्तां प्रसूतिम् ।
तत्त्वालापैः सुखदवचनैः सान्त्वयामास यो वै
तं गौराङ्गं विरतिसुखदं शान्तमूर्तिं स्मरामि ॥१४॥

मातुर्वाक्यात् परिणयविधौ प्राप विष्णुप्रियां यो
गङ्गातीरे परिकरजनैर्दिग्जितो दर्पहारी ।
रेमे विद्वज्जनकुलमणिः श्रीनवद्वीपचन्द्रो
वन्देऽहं तं सकलविषये सिंहमध्यापकानाम् ॥ १५ ॥

विद्याविलासैर्नवखण्डमध्ये
सर्वान् द्विजान् यो विरराज जित्वा ।
स्मार्तांश्च नैयायिक—तांत्रिकांश्च
तं ज्ञानरूपं प्रणमामि गौरम् ॥१६॥

विप्रपादोदकं पीत्वा यो बभूव गतामयः ।
वर्णाश्रमाचारपालं तं स्मरामि महाप्रभुम् ॥१७॥

प्रेतक्षेत्रे द्विजपरिवृतः सर्वदेवप्रणम्यो
मंत्रं लेभे निजगुरु—पुरीवक्त्रतो यो दशार्णम् ।

गौडं लब्ध्वा स्वमति-विकृतिच्छद्मनोवाच तत्त्वं
तं गौराङ्गं नवरसपरं भक्तमूर्तिं स्मरामि ॥१८॥

भक्त्यालापैर्निरवधि तदाद्वैतमुख्या महान्तः
प्राप्ता यस्याश्रयमतिशयं कीर्तनाद्यैर्मुरारेः ।
नित्यानन्दोदयघटनया यो बभूवेशचेष्टो
वन्दे गौरं नयनसुखदं दक्षिणं षड्भुजं तम् ॥१९॥

यः कोलरूपधृगहो वरणीयमूर्ति-
र्गुप्ते कृपां च महतीं सहसा चकार ।
तं व्यासपूजनविधौ बलदेवभावा-
न्माध्वीकयाचनपरं परमं स्मरामि ॥२०॥

अद्वैतचन्द्रविभुना सगणेन भक्त्या
नित्यं च कृष्णमनुना परिपूज्यते यः ।
श्रीवासमन्दिरनिधिं परिपूर्णतत्त्वं
तं श्रीधरादिमहतां शरणं स्मरामि ॥२१॥

श्रीवासपाल्यं यवनं विशोध्य
चक्रे सुभक्तं स्वगुणं प्रदर्श्य ।
प्रेम्णा सुमत्तो विषयाद्विरक्तो
यस्तं प्रभुं गौरविधुं स्मरामि ॥२२॥

श्रीरामरूपधृगहो भिषजो मुरारेः
श्रुत्वा स्तवं रघुपतेर्मुदमाप यो वै ।
चक्रे कुसङ्गरहितं कृपया मुकुन्दं
तं शुद्धभक्ति-रसदप्रवरं स्मरामि ॥२३॥

आज्ञापयच्च भगवानवधूत-दासौ
दानाय गोकुलपतेर्नगरेषु नाम्नाम् ।

सर्वत्र जीवनिचयेषु परावरेषु
यस्तं स्मरामि पुरुषं करुणावतारम् ॥२४॥

योऽद्वैतसद्म विचलन् सह चाग्रजेन
संन्यास–धर्मरहितं ध्वजिनं सुरापम् ।
तत्त्वं विशुद्धमवदल्ललिताख्यपुर्यां
तं शुद्धभक्ति–निलयं शिवदं स्मरामि ॥२५॥

अद्वैतवाद–शठताश्रित–देशिकस्य
पृष्ठं व्यताडयदहो सहसा हरिर्यः ।
प्रेम्णापि भक्तिपथगं च चकार तं तं
मायाहरं सुविमलं सततं स्मरामि ॥२६॥

श्रीरूपधृग् भजनसागरमग्ननृभ्यो
यश्चन्द्रशेखरगृहे प्रददौ स्वदुग्धम् ।
स्वां दर्शयन् विजयमुद्धरति स्म भूतिं
तं सर्वशक्ति–विभवाश्रयणं स्मरामि ॥२७॥

निद्रात्यागः स्नपनमशनं गोद्रुमादौ विहारो
ग्रामे ग्रामे विचरणमहो कीर्तनं चाल्पनिद्रा ।
यामे यामे क्रमनियमतो यस्य भक्तैर्बभूवु-
स्तं गौराङ्गं भजनसुखदं ह्यष्टयामं स्मरामि ॥२८॥

यो वै संकीर्तन–परिकरैः श्रीनिवासादि–संघै-
स्तत्रत्यानां पतित–जगदानन्दमुख्य–द्विजानाम् ।
दुर्वृत्तानां हृदयविवरं प्रेमपूर्णं चकार
तं गौराङ्गं पतित–शरणं प्रेमसिन्धुं स्मरामि ॥२९॥

भावावेशैर्निखिल–सुजनान् शिक्षयामास भक्तिं
तेषां दोषान् सदयहृदयो मार्जयामास साक्षात् ।

भक्तिव्याख्यां सुजन-समितौ यो मुकुन्दश्चकार
तं गौराङ्गं स्वजन-कलुष-क्षान्तिमूर्तिं स्मरामि ॥३०॥

यो वै संकीर्तन-सुखरिपुं चान्दकाजीं विमुच्य
लास्योल्लासैर्नगरनिचये कृष्णगीतं चकार ।
वारंवारं कलिगदहरं श्रीनवद्वीपधाम्नि
तं गौराङ्गं नटनविवशं दीर्घबाहुं स्मरामि ॥३१॥

गङ्गादासो मुररिपु-भिषक् श्रीधरः शुक्लवस्त्रः
सर्वे यस्य प्रणतिनिरताः प्रेमपूर्णा बभूवुः ।
यस्योच्छिष्टाशन-सुरतिका श्रील-नारायणी च
तं गौराङ्गं परमपुरुषं दिव्यमूर्तिं स्मरामि ॥३२॥

श्रीवासस्य प्रणयविवशस्तस्य सूनोर्गतासो-
र्वक्त्रात्तत्त्वं परमशुभदं श्रावयामास तस्मै ।
तद्दासेभ्योऽपि च शुभमतिं दत्तवान् यः परात्मा
वन्दे गौरं कुहकरहितं जीवनिस्तारकं तम् ॥३३॥

गोपीभावात् परमविवशो दण्डहस्तः परेशो
वादासक्तानतिजडमतींस्ताडयामास मूढान् ।
तस्मात्ते यत्प्रतिभटतया वैरभावानतन्वन्
तं गौराङ्गं विमुखकदने दिव्यसिंहं स्मरामि ॥३४॥

तेषां पाप-प्रशमनमतिः कण्टके माघमासे
लोकेशाक्षि-प्रमवयसि यः केशवान्न्यासलिङ्गम् ।
लेभे लोके परमविदुषां पूजनीयो वरेण्य-
स्तं चैतन्यं कचविरहितं दण्डहस्तं स्मरामि ॥३५॥

त्यक्त्वा गेहं स्वजन-सहितं श्रीनवद्वीपभूमौ
नित्यानन्द-प्रणयवशगः कृष्णचैतन्यचन्द्रः ।

भ्रामं भ्रामं नगरमगमच्छान्तिपूर्वं पुरं य-
स्तं गौराङ्गं व्रज-जिगमिषाविष्टमूर्तिं स्मरामि ॥३६॥

तत्रानीता त्वजितजननी हर्षशोकाकुला सा
भिक्षां दत्त्वा कतिपयदिवा पालयामास सूनुम् ।
भक्त्या यस्तद्विधिमनुसरन् क्षेत्रयात्रां चकार
तं गौराङ्गं भ्रमणकुशलं न्यासिराजं स्मरामि ॥३७॥

नित्यानन्दो विबुधजगदानन्द-दामोदरौ च
लीलागाने परमनिपुणो दत्तसूनुर्मुकुन्दः ।
एते भक्ताश्चरणमधुपा येन सार्धं प्रचेलु-
स्तं गौराङ्गं प्रणतपटल-प्रेष्ठमूर्तिं स्मरामि ॥३८॥

त्यक्त्वा गङ्गातट-जनपदांश्चाम्बुलिङ्गं महेशं
ओढ्रे देशे रमणविपिने क्षीरचौरं च वीक्ष्य ।
श्रीगोपालं कटकनगरे यो ददर्शात्मरूपं
तं गौराङ्गं स्वभजनपरं भक्तमूर्तिं स्मरामि ॥३९॥

एकाम्राख्ये पशुपतिवने रुद्रलिङ्गं प्रणम्य
यातः कापोतक-शिवपुरं स्वस्य दण्डं विहाय ।
नित्यानन्दस्तु तदवसरे यस्य दण्डं बभञ्ज
तं गौराङ्गं कपटमनुजं भक्तभक्तं स्मरामि ॥४०॥

भग्ने दण्डे कपट-कुपितस्तान् विहाय स्ववर्गा-
नेको नीलाचलपति-पुरं प्राप्य तूर्णं प्रभुर्यः ।
भावावेशं परममगमत् कृष्णरूपं विलोक्य
तं गौराङ्गं पुरटवपुषं न्यस्तदण्डं स्मरामि ॥४१॥

भावास्वाद-प्रकटसमये सार्वभौमस्य सेवा
तस्यानर्थान् प्रकृतिविपुलान् नाशयामास सर्वान् ।

तस्माद् यस्य प्रबलकृपया वैष्णवोऽभुत् स चापि
तं वेदार्थ-प्रचरणविधौ तत्त्वमूर्तिं स्मरामि ॥४२॥

तत्रोषित्वा कतिपयदिवा दाक्षिणात्यं जगाम
कूर्मक्षेत्रे गदविरहितं वासुदेवं चकार ।
रामानन्दे विजयनगरे प्रेमसिन्धुं ददौ य-
स्तं गौराङ्गं जनसुखकरं तीर्थमूर्तिं स्मरामि ॥४३॥

देशे देशे सुजन-निचये प्रेम विस्तारयन् यो
रङ्गक्षेत्रे कतिपयदिवा भट्टपल्ल्यामवात्सीत् ।
भट्टाचार्यान् परमकृपया कृष्णभक्तांश्चकार
तं गोपालालय-सुखनिधिं गौरमूर्तिं स्मरामि ॥४४॥

बौद्धान् जैनान् भजनरहितान् तत्त्ववादाहतांश्च
मायावाद-ह्रद-निपतितान् शुद्धभक्तिप्रचारैः ।
सर्वांश्चैतान् भजन-कुशलान् यश्चकारात्मशक्त्या
वन्देऽहं तं बहुमतधियां पावनं गौरचन्द्रम् ॥४५॥

दत्त्वानन्दं कलिमलहरं दाक्षिणात्येभ्य ईशो
नीत्वा ग्रन्थौ भजनविषयौ कृष्णदासेन सार्धम् ।
आलालेशालयपथगतो नीलशैलं ययौ य-
स्तं गौराङ्गं प्रमुदितमतिं भक्तपालं स्मरामि ॥४६॥

काशीमिश्र-द्विजवरगृहे शुद्धचामीकराभो
वासं चक्रे स्वजननिकरैर्यः स्वरूपप्रधानैः ।
नामानन्दं सकल-समये सर्वजीवाय योऽदा-
त्तं गौराङ्गं स्वजनसहितं फुल्लमूर्तिं स्मरामि ॥४७॥

नीलागेशे रथमधिगते वैष्णवैर्यस्तदग्रे
नृत्यन् गायन् हरिगुणगणं प्लावयामास सर्वान् ।

प्रेम्णौढ्रीयान् गजपतिमुखान् सेवकान् शुद्धभक्तां-
स्तं गौराङ्गं स्वसुखजलधिं भावमूर्तिं स्मरामि ॥४८॥

ओढ्रदेशाद्ययौ गौडं सीमायामुत्कलस्य यः ।
हित्वौढ्रपार्षदान् देवस्तं स्मरामि शचीसुतम् ॥४९॥

श्रीवासं वासुदेवं च राघवं स्व-स्व-मन्दिरे ।
दृष्ट्वा शान्तिपुरं यातो यस्तं गौरं स्मराम्यहम् ॥५०॥

श्रीविद्यानगरे गच्छन् विद्यावाचस्पतेर्गृहम् ।
कोलद्वीपं नवद्वीपे ययौ यस्तमहं भजे ॥५१॥

विद्यारूपोद्भव-धनजनैर्या न लभ्या नरेण
तां चैतन्यप्रभुवरकृपां दैन्यभावादवाप ।
देवानन्दः कुलियनागरे यस्य भक्तान् प्रपूज्य
वन्दे गौरं विमदविदुषां शुद्धभक्त्येक-लभ्यम् ॥ ५२ ॥

वृन्दारण्येक्षणकपटतो गौडदेशे प्रसूतिं
दृष्ट्वा स्नेहाद् यवनकवलात् साग्रजं रूपमेव ।
उद्धृत्यौढ्रं पुनरपि ययौ यः स्वतंत्रः परात्मा
तं गौराङ्गं स्वजनतरणे हृष्टचित्तं स्मरामि ॥ ५३ ॥

संगं हित्वा बहुविधनृणां भद्रमेकं गृहीत्वा
यात्रां वृन्दावन-दृढमतिर्यश्चकारात्मतंत्रः ।
ऋक्ष-व्याघ्रप्रभृतिक-पशून् मादयित्वात्म-शक्त्या
तं स्वानन्दैः पशुमतिहरं गौरचन्द्रं स्मरामि ॥ ५४ ॥

वृन्दारण्ये गिरिवर-नदी-ग्रामराजीर्विलोक्य
पूर्वक्रीडा-स्मरणविवशो भावपुञ्जैर्मुमोह ।
तस्माद् भद्रो व्रजविपिनतश्चालयामास यं च
तं गौराङ्गं निजजनवशं दीनमूर्तिं स्मरामि ॥ ५५ ॥

भावावेशं पथि परमहो वीक्ष्य तं भाग्यवन्तो
म्लेच्छाः केचिच्छुभमतिबलाल्लेभिरे यत्प्रसादम् ।
भक्तास्ते च प्रणयवशगा यत्प्रसादाद् बभूवु-
स्तं गौरांगं जनिमलहरं शुद्धमूर्तिं स्मरामि ॥ ५६ ॥

पुण्ये गङ्गा-तपनतनया-सङ्गमे तीर्थवर्ये
रूपं विद्यां पररसमयीं शिक्षयामास यो वै ।
प्रेमाणं गोकुलपतिगतं वल्लभाख्यं बुधं च
तं गौरांगं रसगुरुमणिं शास्त्रमूर्तिं स्मरामि ॥ ५७ ॥

काशीक्षेत्रे रसविरहितान् केवलाद्वैतपक्षान्
प्रेम्णाप्लाव्य स्वजन-कृपया यस्तु रूपाग्रजाय ।
विष्णोर्भक्ति-स्मृतिविरचने साधु शक्तिं व्यतारीद्
वन्दे गौरं भजनविषये साधकानां गुरुं तम् ॥ ५८ ॥

धिग् गौराङ्ग-प्रणतिरहितान् शुष्कतर्कादिदग्धा-
नित्येवं वै प्रचुरवचनं शाङ्कराणां बभूव ।
न्यासीशानां सदसि महतां यस्य पूजा तदाभू-
त्तं गौरांगं स्वसुख-मथनानन्दमूर्तिं स्मरामि ॥ ५९ ॥

प्राप्य क्षेत्रं पुनरपि हरिर्भक्तवर्गांस्तुतोष
रामानन्दप्रमुख-सुजनान् सार्वभौमादिकान् यः ।
प्रेमालापैर्हरिरसपरैर्यापयामास वर्षां-
स्तं गौरांगं हरिरसकथास्वादपूर्णं स्मरामि ॥ ६० ॥

यत्पादाब्जं विधि-शिवनुतं वीक्षितुं ते महान्तो
वर्षे वर्षे रथपरिगतौ गौडदेशात् समेत्य ।
प्रीतिं लब्ध्वा मनसि महतीमोढ्रदेशात् समीयु-
र्गौडीयानां परमसुहृदं तं यतीन्द्रं स्मरामि ॥ ६१ ॥

निर्विण्णानां विपुलपतनं स्त्रीषु संभाषणं यत्
तत्तद्दोषात् स्वमतचरकारक्षणार्थं य ईशः ।
दोषात् क्षुद्रादपि लघुहरिं वर्जयित्वा मुमोद
तं गौरांगं विमलचरितं साधुमूर्तिं स्मरामि ॥ ६२ ॥

दैवाद्धीनान्वय-जनिमतां तत्त्वबुद्धिप्रभावा-
दाचार्यत्वं भवति यदिदं तत्त्वमेकं सुगूढम् ।
प्रद्युम्नाय प्रचुरकृपया ज्ञापयामास यस्त-
त्तं गौरांगं गुण-मधुकरं जाड्यशून्यं स्मरामि ॥ ६३ ॥

वात्सल्येन स्वभजनवशाद् दासगोस्वामिनं य-
स्तत्त्वज्ञानं भजनविषये शिक्षयामास साक्षात् ।
सिन्धोस्तीरे चरमसमये स्थापयामास दासं
तं गौरांगं स्वचरणजुषां बन्धुमूर्तिं स्मरामि ॥ ६४ ॥

पुरीं रामाख्यं यो गुरुजनकथा-निन्दनपरं
सदोपेक्ष्य भ्रान्तं कलिकलुषकूपे गतमिह ।
अमोघं स्वीचक्रे हरिजन-कृपालेश-बलतः
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥ ६५ ॥

सनातनं कण्डुरस-प्रपीडितं
स्पर्शेन शुद्धं कृपया चकार यः ।
स्वनाशबुद्धिं परिशोधयन्नहो
स्मरामि गौरं नवखण्डनागरम् ॥ ६६ ॥

गोपीनाथं नरपति-बलाद् यो ररक्षात्मतंत्रो
रामानन्दानुज-निजजनं शिक्षयन् धर्मतत्त्वम् ।
पापैर्लब्धं धनमिति सदा त्याज्यमेव स्वधर्मा-
त्तं गौरांगं स्वजन-शिवदं भद्रमूर्तिं स्मरामि ॥ ६७ ॥

उपायनं राघवतः समाहृतं
पुनः पुनः प्राप्तमपि स्वदेशतः ।
स्वभक्ततो येन परात्परात्मना
तमेव गौरं सततं स्मराम्यहम ॥ ६८ ॥

तैलं नाङ्गीकृतं येन संन्यास–धर्म–रक्षिणा ।
जगदानन्द–दत्तं च स्मरामि तं महाप्रभुम् ॥ ६९ ॥

जगन्नाथागारे गरुडसदन–स्तम्भनिकटे
ददर्श श्रीमूर्तिं प्रणयविवशा कापि जरती ।
समारुह्य स्कन्धं यदमलहरेस्तुष्टमनसः
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥ ७० ॥

पुरीदेवे भक्तिं गुरुचरणयोग्यां सुमधुरां
दयां गोविन्दाख्ये विशद–परिचर्याश्रितजने ।
स्वरूपे यो प्रीतिं मधुररस–रूपां ह्यकुरुत
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥ ७१ ॥

दधानः कौपीनं वसनमरुणं शोभनमयं
सुवर्णाद्रेः शोभां सकल–सुशरीरे दधदपि ।
जपन् राधाकृष्णं गलदुदक–धाराक्षियुगलः
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥ ७२ ॥

मुदा गायन्नुच्चैर्मधुर–हरिनामावलिमहो
नटन् मन्दं मन्दं नगरपथगामी सह जनैः ।
वदन् काक्वा रे रे वद हरिहरीत्यक्षरयुगं
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥ ७३ ॥

रहस्यं शास्त्राणां यदपरिचितं पूर्वविदुषां
श्रुतेर्गूढं तत्त्वं दशपरिमितं प्रेमकलितम् ।
दयालुस्तद् योऽसौ प्रभुरति-कृपाभिः समवद-
च्छचीसनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥ ७४ ॥

आम्नायः प्राह तत्त्वं हरिमिह परमं सर्वशक्ति रसाब्धिं
तद्भिन्नांशांश्च जीवान् प्रकृति-कवलितांस्तद्विमुक्तांश्च भावात् ।
भेदाभेद-प्रकाशं सकलमपि हरेः साधनं शुद्धभक्तिं
साध्यं तत्प्रीतिमेवेत्युपदिशति हरिर्गौरचन्द्रो भजे तम् ॥ ७५ ॥

स्वतः सिद्धो वेदो हरिदयित-वेधः प्रभृतितः
प्रमाणं सत् प्राप्तः प्रमितिविषयांस्तान्नवविधान् ।
तथा-प्रत्यक्षादि-प्रमितिसहितं साधयति नो
न युक्तिस्तर्काख्या प्रविशति तथा-शक्तिरहिता ॥ ७६ ॥

हरिस्त्वेकं तत्त्वं विधि-शिव-सुरेश-प्रणमितो
यदेवेदं ब्रह्म प्रकृति-रहितं तत्तनुमहः ।
परात्मा तस्यांशो जगदनुगतो विश्वजनकः
स वै राधाकान्तो नवजलद-कान्तिश्चिदुदयः ॥ ७७ ॥

पराख्यायाः शक्तेरपृथगपि स स्वे महिमनि
स्थितो जीवाख्यां स्वामचिदभिहितां तां त्रिपदिकाम् ।
स्वतंत्रेच्छः शक्तिं सकलविषये प्रेरणपरो
विकाराद्यैः शून्यः परम पुरुषोऽसौ विजयते ॥ ७८ ॥

स वै ह्लादिन्याश्च प्रणयविकृतेर्ह्लादनरत-
स्तथा संविच्छक्ति-प्रकटित-रहोभावरसितः ।
तया श्रीसन्धिन्या कृतविशद-तद्धामनिचये
रसाम्भोधौ मग्नो व्रजरस-विलासी विजयते ॥ ७९ ॥

स्फुलिङ्गा ऋद्धाग्नेरिव चिदणवो जीवनिचया
हरेः सूर्यस्येवापृथगपि तु तद्भेद-विषयाः ।
वशे माया यस्य प्रकृति-पतिरेवेश्वर इह
स जीवो मुक्तोऽपि प्रकृति-वशयोग्यः स्वगुणतः ॥ ८० ॥

स्वरूपार्थैर्हीनान् निजसुखपरान् कृष्णविमुखान्
हरेर्माया दण्ड्यान् गुणनिगड-जालैः कलयति ।
तथा स्थूलैर्लिङ्गैर्द्विविध-वरणैः क्लेशनिकरै-
र्महाकर्मालानैर्नयति पतितान् स्वर्ग-निरयौ ॥ ८१ ॥

यदा भ्रामं भ्रामं हरिरस-गलद्वैष्णवजनं
कदाचित् संपश्यंस्तदनुगमने स्याद्रुचियुतः ।
तदा कृष्णावृत्या त्यजति शनकैर्मायिकदशां
स्वरूपं बिभ्राणो विमलरस-भोगं स कुरुते ॥८२॥

हरेः शक्तेः सर्वं चिदचिदखिलं स्यात् परिणति-
र्विवर्तं नो सत्यं श्रुतिमत-विरुद्धं कलिमलम् ।
हरेर्भेदाभेदौ श्रुतिविहित-तत्त्वं सुविमलं
ततः प्रेम्णः सिद्धिर्भवति नितरां नित्यविषये ॥८३॥

श्रुतिः कृष्णाख्यानं स्मरण-नति-पूजाविधि-गणा-
स्तथा दास्यं सख्यं परिचरणमप्यात्मददनम् ।
नवाङ्गान्येतानीह विधिगत-भक्तेरनुदिनं
भजन् श्रद्धायुक्तः सुविमल-रतिं वै स लभते ॥८४॥

स्वरूपावस्थाने मधुररस-भावोदय इह
व्रजे राधाकृष्ण-स्वजनजन-भावं हृदि वहन् ।
परानन्दे प्रीतिं जगदतुल-सम्पत्-सुखमथो
विलासाख्ये तत्त्वे परमपरिचर्यां स लभते ॥८५॥

प्रभुः कः को जीवः कथमिदमचिद्विश्वमिति वा
विचार्यैतानर्थान् हरिभजन-कृच्छास्त्र-चतुरः ।
अभेदाशां धर्मान् सकलमपराधं परिहरन्
हरेर्नामानन्दं पिबति हरिदासो हरिजनैः ॥८६॥

संसेव्य दशमूलं वै हित्वाविद्यामयं जनः ।
भावपुष्टिं तथा तुष्टिं लभते साधुसङ्गतः ॥८७॥

इतिप्रायां शिक्षां चरणमधुपेभ्यः परिदिशन्
गलन्नेत्राम्भोभिः स्नपित-निजदीर्घोज्ज्वल-वपुः ।
परानन्दाकारो जगदतुल-बन्धुर्यतिवरः
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥८८॥

गतिर्गौडीयानामपि सकल-वर्णाश्रमजुषां
तथा चौढ्रीयानामतिसरल-दैन्याश्रितहृदाम् ।
पुनः पाश्चात्यानां सदयमनसां तत्त्वसुधिया
शचीसूनुः शश्वत् स्मरणपदवीं गच्छतु स मे ॥८९॥

अहो मिश्रागारे स्वपति-विरहोत्कण्ठ-हृदयः
श्लथात् सन्धेर्दैर्घ्यं दधदतिविशालं करपदोः ।
क्षितौ धृत्वा देहं विकलित-मतिर्गद्गदवचाः
शचीसूनुः साक्षात् स्मरणपदवीं गच्छतु स मे ॥९०॥

गतो बद्धद्वारादुपलगृहमध्याद्बहिरहो
गवां कालिङ्गानामपि समतिगच्छन् वृतिगणम् ।
प्रकोष्ठे सङ्कोचाद् बत निपतितः कच्छप इव
शचीसूनुः साक्षात् स्मरणपदवीं गच्छतु स मे ॥९१॥

व्रजारण्यं स्मृत्वा विरह-विकलान्तर्विलपितो
मुखं संघृष्यासौ रुधिरमधिकं तद्दधदहो ।

क्व मे कान्तः कृष्णो वद वद वदेति प्रलपितः
शचीसूनुः साक्षात् स्मरणपदवीं गच्छतु स मे ॥९२॥

पयोराशेस्तीरे चटक-गिरिराजे सिकतिले
व्रजन् गोष्ठे गोवर्धन-गिरिपतिं लोकितुमहो ।
गणैः सार्धं गौरो द्रुतगति-विशिष्टः प्रमुदितः
शचीसूनुः साक्षात् स्मरणपदवीं गच्छतु स मे ॥९३॥

यस्यानुकम्पा सुखदा जनानां
संसार-कूपाद्रघुनाथदासम् ।
उद्धृत्य गुञ्जाः शिलया ददौ य-
स्तं गौरचन्द्रं प्रणमामि भक्त्या ॥९४॥

सद्भक्तिसिद्धान्त-विरुद्धवादान्
वैरस्य-भावांश्च बहिर्मुखानाम् ।
सङ्गं विहायाथ सुभक्त-गोष्ठ्यां
रराज यस्तं प्रणमामि गौरम् ॥९५॥

नामानि विष्णोर्बहिरङ्ग-पात्रे
विस्तीर्य लोके कलिपावनोऽभूत् ।
प्रेमान्तरङ्गाय रसं ददौ य-
स्तं गौरचन्द्रं प्रणमामि भक्त्या ॥९६॥

नामापराधं सकलं विनाश्य
चैतन्य-नामाश्रित-मानवानाम् ।
भक्तिं परां यः प्रददौ जनेभ्य-
स्तं गौरचन्द्रं प्रणमामि भक्त्या ॥९७॥

इत्थं लीलामय-वरवपुः कृष्णचैतन्यचन्द्रो
वर्षान् द्विद्वादश-परिमितान् क्षेपयामास गार्ह्ये ।
संन्यासे यः समपरिमितं यापयामास कालं
वन्दे गौरं सकल-जगतामाश्रमाणां गुरुं तम् ॥९८॥

दरिद्रेभ्यो वस्त्रं धनमपि ददौ यः करुणया
बुभुक्षून् योऽन्नाद्यैरतिथि-निचयांस्तोषमनयत् ।
तथा विद्यादानैः सुखमतिशयं यः समभजत्
स गौराङ्गः शश्वत् स्मरणपदवीं गच्छतु मम ॥९९॥

संन्यासस्य प्रथम-समये तीर्थ-यात्राच्छलेन
वर्षान् यो वै रस-परिमितान् व्याप्य भक्तिं ततान ।
शेषानब्दान् वसु-विधुमितान् क्षेत्रदेशे स्थितो यो
वन्दे तस्य प्रकट-चरितं योगमाया-बलाढ्यम् ॥१००॥

हा हा कष्टं सकल-जगतां भक्तिभाजां विशेषं
गोपीनाथालय-परिसरे कीर्तने यः प्रदोषे ।
अप्राकट्यं बत समभजन्मोहयन् भक्तनेत्रं
वन्दे तस्याप्रकट-चरितं नित्यमप्राकृतं तत् ॥१०१॥

भक्त्या ये वै सकलसमये गौरगाथामिमां नो
गायन्त्युच्चैर्विगलित-हृदः गौरतीर्थे विशेषात् ।
तेषां तूर्णं द्विजकुल-मणिः कृष्णचैतन्यचन्द्रः
प्रेमावेशं युगल-भजने यच्छति प्राणबन्धुः ॥१०२॥

षट्खवेदे समासेन कार्तिके गोद्रुमे प्रभोः ।
गीता भक्तिविनोदेन लीलेयं लोकपावनी ॥१०३॥

यत्प्रेम-माधुर्य-विलासरागान्नन्दात्मजो गौडविहारमाप ।
तस्यै विचित्रा वृषभानुपुत्र्यै लीला मया तस्य समर्पितेयम् ॥१०४॥

इति श्रीमद्सच्चिदानन्द-भक्तिविनोद-ठक्कुर-विरचितं
श्रीगौराङ्गलीला-स्मरणमङ्गलस्तोत्रं समाप्तम् ।

# श्रीगौराङ्गाष्टोत्तरशतनामस्तोत्रम् ।

नमस्कृत्य प्रवक्ष्यामि देवदेवं जगद्गुरुम् ।
नाम्नामष्टोत्तरशतं चैतन्यस्य महात्मनः ॥ १ ॥

विश्वम्भरो जितक्रोधो मायामानुषविग्रहः ।
अमायी मायिनां श्रेष्ठो वरदेशो द्विजोत्तमः ॥ २ ॥

जगन्नाथप्रियसुतः पितृभक्तो महामनाः ।
लक्ष्मीकान्तः शचीपुत्रः प्रेमदो भक्तवत्सलः ॥ ३ ॥

द्विजप्रियो द्विजवरो वैष्णवप्राणनायकः ।
द्विजातिपूजकः शान्तः श्रीवासप्रिय ईश्वरः ॥ ४ ॥

तप्तकाञ्चनगौराङ्गः सिंहग्रीवो महाभुजः ।
पीतवासा रक्तपट्टः षड्भुजोऽथ चतुर्भुजः ॥ ५ ॥

द्विभुजश्च गदापाणिः चक्री पद्मधरोऽमलः ।
पाञ्चजन्यधरः शार्ङ्गी वेणुपाणिः सुरोत्तमः ॥ ६ ॥

कमलाक्षेश्वरः प्रीतो गोपीलीलाधरो युवा ।
नीलरत्नधरो रूप्यहारी कौस्तुभभूषणः ॥ ७ ॥

श्रीवत्सलाञ्छनो भास्वन्मणिधृक् कञ्जलोचनः ।
ताटङ्कनीलश्रीः रुद्रलीलाकारी गुरुप्रियः ॥ ८ ॥

स्वनामगुणवक्ता च नामोपदेशदायकः ।
आचाण्डालप्रियः शुद्धः सर्वप्राणिहिते रतः ॥ ९ ॥

विश्वरूपानुजः सन्ध्यावतारः शीतलाशयः ।
निःसीमकरुणो गुप्त आत्मभक्तिप्रवर्तकः ॥ १० ॥

महानन्दो नटो नृत्यगीतनामप्रियः कविः ।
आर्तिप्रियः शुचिः शुद्धो भावदो भगवत्प्रियः ॥ ११ ॥

इन्द्रादि–सर्वलोकेश–वन्दित–श्रीपदाम्बुजः ।
न्यासिचूडामणिः कृष्णः संन्यासाश्रमपावनः ॥ १२ ॥

चैतन्यः कृष्णचैतन्यो दण्डधृग् न्यस्तदण्डकः ।
अवधूतप्रियो नित्यानन्द–षड्भुजदर्शकः ॥ १३ ॥

मुकुन्दसिद्धिदो दीनो वासुदेवामृतप्रदः ।
गदाधरप्राणनाथ आर्तिहा शरणप्रदः ॥ १४ ॥

अकिञ्चनप्रियः प्राणो गुणग्राही जितेन्द्रियः ।
अदोषदर्शी सुमुखो मधुरः प्रियदर्शनः ॥ १५ ॥

प्रतापरुद्रसंत्राता रामानन्दप्रियो गुरुः ।
अनन्तगुणसम्पन्नः सर्वतीर्थैकपावनः ॥ १६ ॥

वैकुण्ठनाथो लोकेशो भक्ताभिमतरूपधृक् ।
नारायणो महायोगी ज्ञानभक्तिप्रदः प्रभुः ॥ १७ ॥

पीयूषवचनः पृथ्वीपावनः सत्यवाक् सहः ।
ओढ्रदेशजनानन्दी सन्दोहामृतरूपधृक् ॥ १८ ॥

यः पठेत् प्रातरुत्थाय चैतन्यस्य महात्मनः ।
श्रद्धया परयोपेतः स्तोत्रं सर्वाघनाशनम् ।
प्रेमभक्ति हरौ तस्य जायते नात्र संशयः ॥ १९ ॥

असाध्यरोगयुक्तोऽपि मुच्यते रोगसङ्कटात् ।
सर्वापराधयुक्तोऽपि सोऽपराधात् प्रमुच्यते ॥ २० ॥

फाल्गुनी-पौर्णमास्यान्तु चैतन्य-जन्मवासरे ।
श्रद्धया परया भक्त्या महास्तोत्रं जपन् पुरः ।
यद् यत् प्रकुरुते कामं तत् तदेवाचिराल्लभेत् ॥ २१ ॥

अपुत्रो वैष्णवं पुत्रं लभते नात्र संशयः ।
अन्ते चैतन्यदेवस्य स्मृतिर्भवति शाश्वती ॥ २२ ॥

इति श्रीसार्वभौम-भट्टाचार्य-विरचितं सर्वापराधभञ्जनं
श्रीगौराङ्गाष्टोत्तरशतनामस्तोत्रं
सम्पूर्णम् ।

# श्रीगौराङ्गसहस्रनामस्तोत्रम् ।

कैलासशिखरे रम्ये सुखासीनं त्रिलोचनम् ।
प्रणम्य शिरसा नाथं पार्वती परिपृच्छति ॥ १ ॥

पार्वत्युवाच

तत्र श्रुतं पुरा देव ! गौराङ्गस्य महात्मनः ।
सहस्रं नाम सच्चित्रं गकारादिकमिष्टदम् ॥ २ ॥

गुह्याद् गुह्यतरं लोके सर्वाभीष्टार्थसाधकम् ।
तन्मे वदस्व देवेश यद्यहं वल्लभा तव ॥ ३ ॥

महादेव उवाच

लक्षवारसहस्राणि वारितासि पुनः पुनः ।
स्त्रीस्वभावान्महादेवि ! पुनस्तत् परिपृच्छसि ॥ ४ ॥

रहस्यातिरहस्यं यद् गोपनीयं प्रयत्नतः ।
तत्ते वक्ष्यामि देवेशि ! स्नेहात्तव शुचिस्मिते ॥ ५ ॥

ॐ अस्य गौरचन्द्रस्य गकारादिसहस्रनाममंत्रस्य दुर्वासा ऋषिर्गायत्रीच्छन्दो गौरचन्द्रो देवता गं बीजं स्वाहा शक्ति गौं कीलकं मम सकलाभीष्टसिद्ध्यर्थे सहस्रनामस्तोत्रपाठे विनियोगः ॥

ॐ गौडेश्वरो गौडाध्यक्षो गौडाराध्यो गौडप्रियः ।
गौडनाथो गौडस्वामी गौडेशो गौडनायकः ॥ ६ ॥

गौडमूर्तिर्गौडपतिर्गौडत्राता गौडंजयः ।
गौडपोतो गौडक्रीडो गौडदेवो गौडाधिपः ॥ ७ ॥

गौडज्येष्ठो गौडश्रेष्ठो गौडप्रेष्ठो गौडाधिराट् ।
गौडदीप्ता गौडगोप्ता गौराङ्गो गौडदैवतम् ॥ ८ ॥

गौडबन्धुर्गौडसुहृद् गौडाधीशो गौडप्रथः ।
गौडप्रियो गौडसखो गौडप्रियसुहृत्तथा ॥ ९ ॥

गौडप्रियरतो नित्यं गौडप्रीतिविवर्धनः ।
गौडमण्डलमध्यस्थो गौडकेलिपरायणः ॥ १० ॥

गौडग्राही गौडेशानो गौडगीतगुणाश्रयः ।
गौडो गौडहितागर्ह्यो गौडसेनो गौडोद्धतः ॥ ११ ॥

गौडपतिप्रमथनो गौडभृत्याघहारकः ।
गौडेनार्हो गौडप्रौढी गौडभर्ता गौडप्रभुः ॥ १२ ॥

गौडस्तेनो गौडचरो गौडप्राज्ञो गौडक्रतुः ।
गौडाग्रगण्यनामा च गौडपालनतत्परः ॥ १३ ॥

गौडाजितो गौडगर्भो गौडप्रबन्धमानसः ।
गौडगर्वपरिहर्ता गौडागौडनमस्कृतः ॥ १४ ॥

गौडार्चितांघ्रियुगलो गौडरक्षणकृत्सदा ।
गौडध्यातो गौडगुरु-गौडप्रयततत्परः ॥ १५ ॥

गौडागौडपरित्राता गौडाधिहरणोद्धरः ।
गौडसेतुर्गौडनतो गौडहेतुर्गौडोत्कता ॥ १६ ॥

गौडकेतुर्गौडत्राही गौडानुग्रहकारकः ।
गौडागौडानुग्रहभूर्गौडागौडवरप्रदः ॥ १७ ॥

गौडहृद्गो गौडप्राणो गौडसर्वस्वदायकः ।
गौडवल्लभमूर्तिश्च गौडभूतिर्गौडेष्टदः ॥ १८ ॥

गौडसख्यप्रदाता च गौडदुःखप्रणाशकः ।
गौडप्रथितनामा च गौडाभीष्टकरः सदा ॥ १९ ॥

गौडमान्यो गौडत्राता गौडचित्तो गौडोत्कटः ।
गौडपालो गौडवरो गौडगौरवदायकः ॥ २० ॥

गौडगर्जितसन्तुष्टो गौडस्वच्छन्दगः सदा ।
गौडराजो गौडश्रीदो गौडाभयकरः सदा ॥ २१ ॥

गौडमूर्धाभिषिक्तश्च गौडसैन्यपुरःसरः ।
गौडातीतो गौडमयो गौडत्रयविभागकृत् ॥ २२ ॥

गौडागौडकृतिधरो गौडन्यासी गौडप्रियः ।
गौडपूर्णो गौडाम्भोधिर्गौडभाग् गौडद्गश्वरः ॥ २३ ॥

गौडगौरवी गौडेशो गुणज्ञो गुणमण्डितः ।
गौडस्रष्टा गौडेशानो गौडेन्द्रश्च गौडेश्वरः ॥२४॥

गौडश्रेष्ठो गौडाध्यक्षो गौडमुख्यो गुणस्वराट् ।
गौडप्रविष्टो गुणभृद् गौडकृच्च चराचरः ॥२५॥

गौडप्रणयसन्तुष्टो गौडागुणपराङ्मुखः ।
गौडैकभूर्गुणश्रेष्ठो गुणज्येष्ठो गौडप्रभुः ॥२६॥

गौडज्ञो गुणसंहृष्टो गुणैकसदनं सदा ।
गौडप्रणयवान् गौडप्रकृतिर्गुणभाजनम् ॥२७॥

गौडप्रणतवादाढ्यो गुणिगीतो गुणोज्ज्वलः
गुणवान् गुणसम्पन्नो गुणानन्दितमानसः ॥२८॥

गुणसञ्चारचतुरो गुणसञ्चयसुन्दरः ।
गुणगौरो गुणाधारो गुणसंवीतचेतनः ॥२९॥

गुणदृग् गुणभृन्नित्यं गुणाग्रो गुणपारगः ।
गुणप्रचारी गुणयुग् गुणागुणविवेकवित् ॥३०॥

गुणाकरो गुणकरो गुणप्रणयवर्धनः ।
गुणगूढचरो गौरसर्वसंसारचेष्टितः ॥३१॥

गुणदक्षिणसौहार्दो गुणलक्षणतत्त्ववित् ।
गुणहारी गुणधारी गुणसंगसखः सदा ॥३२॥

गुणसंस्कृतसंसारो गुणतत्त्वविवेचकः ।
गुणगर्वधरो गौरः सुखदुःखदयागुणः ॥३३॥

गुणाधीनो गुणमयः गुणवीक्षणलालसः ।
गुणगौरवदाता च गुणदाता गुणप्रदः ॥३४॥

गुणकृद् गुणसंबन्धो गुणभुग् गुणवन्दनः ।
गुणहृद्यो गुणस्थायी गुणदायी गुणोत्कटः ॥३५॥

गुणचक्रचरो गौरावतारो गुणबान्धवः ।
गुणबन्धुर्गुणप्राज्ञो गुणप्रज्ञो गुणालयः ॥३६॥

गुणधाता गुणप्राणो गुणगोपो गुणाश्रयः ।
गुणपायो गुणधायी गुणोपगुणपालकः ॥३७॥

गुणायुततनुर्गौरो गीर्वाणो गुणगौरवः ।
गुणवत्पूजितपदो गुणवत्प्रीतिदायकः ॥३८॥

गुणवद्गीतकीर्तिश्च गुणवच्छब्दसौहृदः ।
गुणवद्वरदो नित्यं गुणवत्प्रतिपालकः ॥३९॥

गुणवद्गुणसन्तुष्टो गुणवद्रचितस्तवः ।
गुणवद्रक्षणपरो गुणवत्प्रणयप्रियः ॥४०॥

गुणवच्चक्रसञ्चारो गुणवत्कीर्तिवर्धनः ।
गुणवद्गुणचित्तस्थो गुणवद्गुणरक्षकः ॥४१॥

गुणवत्तोषणकरो गुणवच्छत्रुसूदनः ।
गुणवत्सिद्धिदाता च गुणवद्गौरवप्रदः ॥४२॥

गुणवत्प्रणयशान्तो गुणवद्गुणभूषणः ।
गुणवत्कुलविद्वेषविनाशकरणक्षमः ॥४३॥

गणस्तुतगुणो गर्जत्प्रलयाम्बुदनिःस्वनः ।
गौडगजपतिर्गर्जत्गौडरङ्गविशारदः ॥४४॥

गौरास्यो गौरकर्णोऽथ गौरराजो गौराननः ।
गौररूपधरो गह्यगर्जन्मुखोद्धुरध्वनिः ॥४५॥

गुणकृद् गुणसंबन्धो गुणभुग् गुणवन्दनः ।
गुणहृद्यो गुणस्थायी गुणदायी गुणोत्कटः ॥३५॥

गुणचक्रचरो गौरावतारो गुणबान्धवः ।
गुणबन्धुर्गुणप्राज्ञो गुणप्रज्ञो गुणालयः ॥३६॥

गुणधाता गुणप्राणो गुणगोपो गुणाश्रयः ।
गुणपायो गुणधायी गुणोपगुणपालकः ॥३७॥

गुणायुततनुर्गौरो गीर्वाणो गुणगौरवः ।
गुणवत्पूजितपदो गुणवत्प्रीतिदायकः ॥३८॥

गुणवद्गीतकीर्तिश्च गुणवच्छब्दसौहृदः ।
गुणवद्वरदो नित्यं गुणवत्प्रतिपालकः ॥३९॥

गुणवद्गुणसन्तुष्टो गुणवद्रचितस्तवः ।
गुणवद्रक्षणपरो गुणवत्प्रणयप्रियः ॥४०॥

गुणवच्चक्रसञ्चारो गुणवत्कीर्तिवर्धनः ।
गुणवद्गुणचित्तस्थो गुणवद्गुणरक्षकः ॥४१॥

गुणवत्तोषणकरो गुणवच्छत्रुसूदनः ।
गुणवत्सिद्धिदाता च गुणवद्गौरवप्रदः ॥४२॥

गुणवत्प्रणयशान्तो गुणवद्गुणभूषणः ।
गुणवत्कुलविद्वेषविनाशकरणक्षमः ॥४३॥

गणस्तुतगुणो गर्जत्प्रलयाम्बुदनिःस्वनः ।
गौडगजपतिर्गर्जत्गौडरङ्गविशारदः ॥४४॥

गौरास्यो गौरकर्णोऽथ गौरराजो गौराननः ।
गौररूपधरो गर्ह्य गर्जन्मुखोद्धुरध्वनिः ॥४५॥

गौडाधीशो गौडवीरो गौडासुरजयोद्धरः ।
गौडदन्तो गौरवरो गौडकण्ठो गौडध्वनिः ॥४६॥

गौडमायो गौडमयो गौडश्रीगौडगर्जितः ।
गौडामयहरो नित्यं गौडपुष्टिप्रदायकः ॥४७॥

गौडोन्नतिर्गौडत्राता गौडप्रभुर्गजाधिपः ।
गौडमुख्यो गौडकुलप्रचारो गौडदैत्यहा ॥४८॥

गौडकेतुर्गौडाध्यक्षो गौडसेतुर्गौडाकृतिः ।
गौडवंद्यो गौडप्राणो गौडसेव्यो गौडप्रभुः ॥४९॥

गौडमत्तो गौडेशानो गौडेशो गौडपुङ्गवः ।
गजदन्तधरो गुञ्जन्मधुपो गौडवेश्मगः ॥५०॥

गौडच्छद्मो गौडाग्रस्तो गौडमायी गौडाजयः ।
गौडराट् गौडयूथश्च गौडगञ्जकभञ्जकः ॥५१॥

गर्जितोत्कृतदैत्यासुर्गौडजिद्रातविस्मयः ।
गौडज्ञो गौडकुशलो गौडतत्त्वविवेचकः ॥५२॥

गौडश्लाघी च गौडस्थो गौडज्ञानपरायणः ।
गौडगौरववर्धनो गौडप्रबलचेतनः ॥५३॥

गौडहृदो ज्ञानगुरुर्गौडविद्याविशारदः ।
गौडध्येयो गौडयूथो गौडध्यानपरायणः ॥५४॥

गौडभूर्गौडशीलश्च गौडशाली गौडाश्रमः ।
गौडसुविज्ञानमयो गौडश्रवणलालसः ॥५५॥

गौडसाक्षी गौडमयो गौडप्रणयवान् सदा ।
गौडध्यानो गौडबुद्धिर्गौडस्तवमनाः पुनः ॥५६॥

गौडोत्सुको गौडभूमिगौंडसीमा गौडोज्ज्वलः ।
गौडयज्ञवांश्च गौडज्ञानवान् गौडमण्डलः ॥५७॥

गौडगानप्रणयवान् गौडध्यानाभिभूषणः ।
गौडसिन्धुगौंडपरो गौडप्राणो गौडाश्रयः ॥५८॥

गौडैकभूगौंडहृष्टो गौडचक्षुगौंडैकहृक् ।
गौडमन्त्रो गौडरुचिगौंडविद् गौडवित्प्रियः ॥५९॥

गौडान्तरात्मा गौडाराध्यो गौडभ्राजत्सभः सदा ।
गौडमायो गौडधरो गौडविघ्नविशोधकः ॥६०॥

गौडाहितघ्नो गौडेन्द्रो गौडलीनो गौडप्रियः ।
गौडाधीनो गौडलयो गौडाधारो गौडगतिः ॥६१॥

गौडातिमानदो गौडभूतिगौंडकलालयः ।
गौडगानततो गानतानदानविमोहितः ॥६२॥

गौडो गौडोदरश्रोणी गौडतत्त्वार्थदर्शनः ।
गौडगुरुगौंडागुरुः सर्वदा गौडमण्डले ॥६३॥

गौडकीर्तिगौंडभृतोगौंडव्यक्षो गौडप्रभुः ।
गौडलक्षणसम्पन्नो गौडद्रोहपराङ्मुखः ॥६४॥

गौडविद्यो गौडप्राज्ञो गौडबाहुबलोच्छलः ।
गौडदैत्यगर्वहरो गौडदैत्यावहारकः ॥६५॥

गौडगर्वहरो ब्रह्मगौरो गुरुदर्पहरः ।
गौडगौरवदाता च गौडभृत्याघहारकः ॥६६॥

गौडगर्जितसम्पूर्णब्रह्माण्डो गुरुगर्जितः ।
गौडपुत्रपुरःसरो गौडपुत्रभयापहा ॥६७॥

गौडपुत्रपरित्राता गौडपुत्रवरप्रदः ।
गौडपुत्राक्षिशमनो गौडपुत्राघनाशनः ॥६८॥

गौडपुत्रप्राणदाता गौडभक्तिपरायणः ।
गौडविज्ञानविभवो सदा गौडवरप्रदः ॥६९॥

गौडजनोरुदाता च गौडक्लेशापहारकः ।
गौडजनप्रियो गौडसुजनप्रियवर्धनः ॥७०॥

गौडजनपरित्राता गौडजनसखः सदा ।
गौरभानुप्रभो गौडभानुभीतिप्रणाशनः ॥७१॥

गौडज्ञानन्धयो गौरीमनोवाञ्छितसिद्धिकृत् ।
गौडगौरगुणो गौडप्रकाशो गौडवैभवः ॥७२॥

गौडेशनन्दनो गौडप्रियपुत्रो गदाधरः ।
गौडवरप्रदो गौडप्रणयो गौरसच्छविः ॥७३॥

गौडमनश्चरो गौडप्रवणो गौडभावनः ।
गौडात्मा गौडकीर्तिश्च गौडभावो गरिष्ठदृक् ॥७४॥

गौडभोगाभिलाषार्थी गौडेशप्राणवल्लभः ।
गौडाभीष्टवरदश्च गौतमाभयदायकः ॥७५॥

गौडविक्रमसञ्चारो गौडदृग्गुरुविक्रमः ।
गौडक्रमो गौडश्रेष्ठो गौडपाषण्डखण्डकः ॥७६॥

गौडशुण्डो गौडस्कन्दो गौडजन्यो गौडप्रथः ।
गौडमानो गौडगणो गौडश्रीगौडगर्वभृत् ॥७७॥

गौडसुगुरुपीनांसो गौडप्रणयलालसः ।
गौडमुख्यो गौडकुलस्थायी गौडगुरुः सदा ॥७८॥

गौडसंशयभेत्ता च गौडसात्मप्रदायकः ।
गौडधर्मव्याहारज्ञो गौडधार्मिककेतनः ॥७९॥

गौडदैन्यो गौडच्छेत्ता गौडसेत्या गौडयुतिः ।
गौडधर्माग्रगण्यो यः गौडधर्मधुरन्धरः ॥८०॥

गौडेष्टो गौडसन्तापशमनो गौडपूजितः ।
गौडधर्मधरो गौडधर्मवीरो गदापहा ॥८१॥

गौडशास्त्रार्थनिलयो गौडशास्त्रार्थस्यालयः ।
गौडमन्त्रो गौडश्रेष्ठो गौडमन्त्रफलप्रदः ॥८२॥

गौडस्त्रीगमनोद्दामप्रायश्चित्तनिवारकः ।
गौडसंसारसुखदो गौडसंसारदुःखहृत् ॥८३॥

गौडश्लाघापरो गौडभानुखण्डावतंसभृत् ।
गौडप्रमत्तमूर्तिश्च गौडेशाघविमोचकः ॥८४॥

गौरकान्तिर्गौरमहो गुरुशासनपालकः ।
गौडतन्त्रो गौडप्रज्ञो गौडज्ञो गुरुदैवतम् ॥८५॥

गौडसुप्रणयप्राज्ञो गौतमाश्रमदुःखहा ।
गौमतीतीरसञ्चारी गौतमीतीर्थनायकः ॥८६॥

गौडापत्यविहरो गौडापत्याधिविनाशनः ।
गौडपतिर्गोपधनो गोपालप्रियदर्शनः ॥८७॥

गोपालो गोपनाधारो गौडेश्वरनिबन्धकः ।
गोपात्मको गोपवरो गोपसार्थसुखावहः ॥८८॥

गौडधनो गोपगोपीगोमान् गोधनवर्धनः ।
गौडचरो गौडाराध्यो गोचरप्रीतिर्बद्धकृत् ॥८९॥

गौतमीगोकष्टसंत्राता गोसन्तानातिवर्धकः।
गौडाश्रयो गौडगोष्ठीपतिर्गोधनवर्धनः॥९०॥

गौडप्रियो गोष्ठमयो गोष्ठामयनिवर्तकः।
गोलोको गौडको गोभृद् गोभर्ता गोसुखावहः॥९१॥

गौडधुग् गोदुघांश्रेष्ठो गोदोहगापयःप्रियः।
गौडागौडपतिर्गौडप्रभुर्गोत्रिभयापहा ॥९२॥

गौडवृद्धिकरो गोत्रप्रियो गोत्रार्तिनाशनः।
गौडोद्धारपरो गोत्रप्रवरो गोत्रदैवतम्॥९३॥

गौडविख्यातनामा च गौडगोत्रप्रपालकः।
गौडसेतुर्गौडकेतुर्गौडहेतुर्गौडक्रमः ॥९४॥

गौडत्राणकरो गौडपतिर्गौडेशपूजितः।
गौडभृद् गौडभूत्राता गौडभीरुसहायकः॥९५॥

गौडभृत्यपूजितश्च गौडभिच्छत्रुसूदनः।
गौडभित्प्रीतिदो नित्यं गौडभिद्गोत्रपालकः॥९६॥

गौडभिद्गीतचरितो गोत्रभित्प्रणयः सदा।
गौडभिद्भयसंभेत्ता गोत्रभित्त्राणदायकः॥९७॥

गौडभिद्रोपनपरो गोत्रभित्सैन्यनायकः।
गौडाधिपप्रियो गोत्रपुत्रीपुत्रो गिरिप्रियः॥९८॥

ग्रन्थज्ञो ग्रन्थकृद् ग्रन्थग्रन्थिभिद् ग्रन्थविघ्नहा।
गौडादिग्रन्थसञ्चारो ग्रन्थेशो ग्रन्थलोलुपः॥९९॥

गौडाधीनक्रियो ग्रन्थप्रियो ग्रन्थार्थतत्त्ववित्।
ग्रन्थसंशयसंच्छेत्ता ग्रन्थवक्ताग्रहाग्रणी॥१००॥

गौडातीतगुणो ग्रन्थग्राही ग्रन्थार्थपरिहारकः ।
गौडदृग् ग्रन्थविज्ञानं ग्रन्थसन्दर्भशोधकः ॥१०१॥

ग्रन्थकृत्पूजितो ग्रन्थकरो ग्रन्थपरायणः ।
ग्रन्थपारायणपरो ग्रन्थसन्देहभञ्जकः ॥१०२॥

गौडकृद्वरदाता च ग्रन्थकृद्वन्दितः सदा ।
गौडान्तरक्तो ग्रन्थाग्रो ग्रन्थानुग्रहदायकः ॥१०३॥

गौडान्तरात्मा यः सदा ग्रन्थार्थाग्रन्थविग्रहः ।
गौडसेतुर्ग्रन्थहेतुर्ग्रन्थकेतुर्ग्रन्थाग्रतः ॥१०४॥

ग्रन्थपूज्यो ग्रन्थज्ञेयो ग्रन्थग्रन्थनलालसः ।
गौडभूतिर्ग्रहश्रेष्ठो ग्रहकेतुर्ग्रहाश्रयः ॥१०५॥

गौडाकारो ग्रन्थकरमान्यो ग्रन्थप्रसारकः ।
गौडश्रमज्ञो ग्रन्थाग्रो ग्रन्थभ्रमनिवारकः ॥१०६॥

गौडप्रवणसर्वज्ञो ग्रन्थप्रणयतत्परः ।
गौडगीतगुणो गीतकीर्तिर्गीतविशारदः ॥१०७॥

गौडस्फीतयशा गीतप्रणयी गीतचञ्चरः ।
गीतप्रसन्नो गीतात्मा गीतलोलो गतस्पृहः ॥१०८॥

गीताश्रयो गीतमयो गीततत्त्वार्थपारगः ।
गीतसंशयसंछेत्ता गीतसङ्गीतशासनः ॥१०९॥

गौडार्थज्ञो गीततत्त्वो गीतवक्त्वं गताश्रयः ।
गौडसारोऽथ गीतकृद् गीतविघ्नविनाशनः ॥११०॥

गीतासक्तो गीतलीलो गीतापगतसंज्वरः ।
गौडेकदृग् गीतभूतिर्गीतप्रीतो गतालसः ॥१११॥

गौडातीतगुणो ग्रन्थग्राही ग्रन्थार्थपरिहारकः ।
गौडदृग् ग्रन्थविज्ञानं ग्रन्थसन्दर्भशोधकः ॥१०१॥

ग्रन्थकृत्पूजितो ग्रन्थकरो ग्रन्थपरायणः ।
ग्रन्थपारायणपरो ग्रन्थसन्देहभञ्जकः ॥१०२॥

गौडकृद्वरदाता च ग्रन्थकृद्वन्दितः सदा ।
गौडान्तरक्तो ग्रन्थाग्रो ग्रन्थानुग्रहदायकः ॥१०३॥

गौडान्तरात्मा यः सदा ग्रन्थार्थाग्रन्थविग्रहः ।
गौडसेतुर्ग्रन्थहेतुर्ग्रन्थकेतुर्ग्रन्थाग्रतः ॥१०४॥

ग्रन्थपूज्यो ग्रन्थज्ञेयो ग्रन्थग्रन्थनलालसः ।
गौडभूतिर्ग्रहश्रेष्ठो ग्रहकेतुर्ग्रहाश्रयः ॥१०५॥

गौडाकारो ग्रन्थकरमान्यो ग्रन्थप्रसारकः ।
गौडश्रमज्ञो ग्रन्थाग्रो ग्रन्थभ्रमनिवारकः ॥१०६॥

गौडप्रवणसर्वज्ञो ग्रन्थप्रणयतत्परः ।
गौडगीतगुणो गीतकीर्तिर्गीतविशारदः ॥१०७॥

गौडस्फीतयशा गीतप्रणयी गीतचञ्चरः ।
गीतप्रसन्नो गीतात्मा गीतलोलो गतस्पृहः ॥१०८॥

गीताश्रयो गीतमयो गीततत्त्वार्थपारगः ।
गीतसंशयसंछेत्ता गीतसङ्गीतशासनः ॥१०९॥

गौडार्थज्ञो गीततत्त्वो गीतवत्त्वं गताश्रयः ।
गौडसारोऽथ गीतकृद् गीतविघ्नविनाशनः ॥११०॥

गीतासक्तो गीतलीलो गीतापगतसंज्वरः ।
गौडैकदृग् गीतभूतिर्गीतप्रीतो गतालसः ॥१११॥

गीतवाद्यप्रभुर्गीतविवेकज्ञो गीतप्राणः ।
गौडभीर्गतविद्वेषो गतसंसारबन्धनः ॥११२॥

गौडमायो गतत्रासो गौडदुःखगतज्वरः ।
गतासुभृद् गताज्ञानो गतदुष्टाशयागतः ॥११३॥

गतार्तिर्गतसंकल्पो गतदुष्टविचेष्टितः ।
गताहङ्कारसञ्चारो गतदर्पाहृताहितः ॥११४॥

गौडाविष्टो गौडाभयो गौडागौडनिवारकः ।
गौडव्यथो गतपापो गतदोषो गतपरः ॥११५॥

गौडसर्वविकारोऽथ गतगञ्जितकुञ्जरः ।
गौडकम्पितभूपृष्ठो गतरुङ्गतकल्मषः ॥११६॥

गौडादित्यो गौडसैन्यो गतमानो गतश्रमः ।
गौडाभावो गौडभवो गौडतत्त्वार्थसंश्रयः ॥११७॥

गौडशिरोमणिर्गौरो गौडागौडवरप्रदः ।
गौडावासो गौडनाथो गौडवासिनमस्कृतः ॥११८॥

गौडतीर्थफलाध्यक्षो गौडात्मगफलप्रदः ।
गौडमयो गयाक्षेत्रं गौडक्षेत्रनिवासकृत् ॥११९॥

गौडवासिस्तुतो गायन्मधुव्रतलसत्तटः ।
गौडको गायकवरो गायकेषु फलप्रदः ॥१२०॥

गौडप्रणयभोगीच गौडपूज्याभयप्रदः ।
गायकप्रवणस्वान्तो गायकप्रथमः सदा ॥१२१॥

गौडकोद्गीतसंप्रीतो गोपकोद्भटविघ्नहा ।
गौडकेशो गायकेशो गायकान्तरसंवरः ॥१२२॥

गायकप्रियदश्चाथ गायकाधीनविग्रहः ।
गौडगेयगुणोपात्तो गेयविद् गेयतत्त्ववित् ॥१२३॥

गायकत्रासदग्रन्थो ग्रन्थतत्त्वविवेचकः ।
गौडानुरागो गौराङ्गो गाढगङ्गाजनाग्रहः ॥१२४॥

गौडावगाढजलधिर्गाढप्राज्ञमनोमयः ।
गाढप्रीत्यर्थसैन्योऽथ गाढान्तर्ग्रहतत्परः ॥१२५॥

गौडाश्लेषरसाभिज्ञो गङ्गाधरभयापहः ।
गौडागाधगुरुर्गङ्गाधरध्यानपदः सदा ॥१२६॥

गङ्गाधरस्तुतो गङ्गाधराराध्यो गतस्मयः ।
गौडाचारप्रियो गौडद्विजश्रेष्ठफलप्रदः ॥१२७॥

गौडजनरसास्वादगुणो गौडकुलेश्वरः ।
गौडजनप्रीतिकरो गङ्गातीरविहारकः ॥१२८॥

गौडप्रियः सदा गौरगङ्गाजलप्रियः सदा ।
गौडसज्जनसंवासो गौडदेशे च केलिकृत् ॥१२९॥

गौडालयसंसर्गो च गन्धलुब्धमधुव्रतः ।
गौडागौडराजोऽथ हि गन्धर्वप्रियकृत् सदा ॥१३०॥

गौडविद्यासुतत्त्वज्ञो गन्धर्वप्रीतिवर्धनः ।
गौडबीजनिलयोऽथ गकारो गर्विगर्वधुक् ॥१३१॥

गन्धर्वगणसंसेव्यो गन्धर्ववरदायकः ।
गौडसेव्यो गौडगजो गन्धर्वकुलदैवतम् ॥१३२॥

गन्धर्वगर्वसंच्छेत्ता गन्धर्ववरदर्पहा ।
गन्धर्वप्रवणस्वान्तो गन्धर्वगणसंस्तुतः ॥१३३॥

गौडार्चितपदभूपो गौडभयापहारकः ।
गौडनाथो गौडवरो गौडसुप्रतिपालकः ॥१३४॥

गौडगीतसुचरितो गौडप्रणयकृत्प्रभुः ।
गौडगानसुश्रवणप्रणयी गर्वभाजनम् ॥१३५॥

गन्धर्वत्राणसंनद्धो गन्धर्वसमरक्रमः ।
गौडस्त्रीभिराराध्यो यो गौडागौडमयः सदा ॥१३६॥

गौडागौडपति–गौडीनायको गौडगर्वहा ।
गौडराजोऽथ गौडेशो गौडराजनमस्कृतः ॥१३७॥

गौडप्रियो गौडगुरुर्गौडत्राणकृतोऽथ सः ।
गौडप्रभुर्गौडचरो गौडप्रियकृतोद्यमः ॥१३८॥

गौडदुःखापहारी च गौडमर्यादापालकः ।
गौडधाता गौडभर्ता गौडबन्धुर्गौडगुरुः ॥१३९॥

गौडागौडसदो गौडसदाभीष्टवरप्रदः ।
गीर्वाणवरदाता च गीर्वाणभयनाशकः ॥१४०॥

गीर्वाणगणसंवीतो गीर्वाणारातिसूदनः ।
गीर्वाणधामगीर्वाणो गौडेशो गौडगर्वकृत् ॥१४१॥

गीर्वाणप्राणदो गौरो गौराङ्गो भक्तवत्सलः ।
गौडप्राणप्रदो गौडगीर्वाणमानरक्षकः ॥१४२॥

गौडदानरतो गन्धसक्तो गीर्वाणपूजितः ।
गौडसेवितपदो यो गौडप्रथितभूपतिः ॥१४३॥

गौडगोत्रप्रवरोऽपि गीर्वाणफलदायकः ।
गौडीयप्रियकर्ता च गीर्वाणागमसारवित् ॥१४४॥

गौडेष्टगणसम्पत्तिर्गीर्वाणव्यसनापहा ।
गौडप्रणयप्रगीतग्रहणोत्सुकमानसः ॥१४५॥

गौडश्रमसंभेत्ता च गीर्वाणगुरुपूजितः ।
ग्रहो ग्रहपतिर्ग्राहो ग्रहपीडाप्रणाशनः ॥१४६॥

ग्रहस्तुतो ग्रहाध्यक्षो ग्रहेशानो ग्रहेश्वरः ।
ग्रहाराध्यो ग्रहत्राता ग्रहगोपो ग्रहोत्कटः ॥१४७॥

गौडगीतगुणो ग्रन्थप्रणेता ग्रहवन्दितः ।
गौडागौडचरो गर्वी गर्विष्ठो गर्विगर्वहा ॥१४८॥

गवीप्रियो गवीनाथो गवीशोऽथ गवीपतिः ।
गव्यप्रियो गवीगोप्ता गवीसम्पत्तिसाधकः ॥१४९॥

गौडरक्षणसन्नद्धो गवीभयहरेक्षणः ।
गवीगर्वहरो गोदो गोप्रदो गोजयप्रदः ॥१५०॥

गङ्गापूतबलो गङ्गभङ्गन्मत्तमधुव्रतः ।
गण्डस्थलगलहारगन्धमत्तालिमण्डितः ॥१५१॥

गुडो गुडप्रियो गण्डगणहा गोगुडाशनः ।
गुडाकेशो गुडाकेशसहायो गुडलक्षकः ॥१५२॥

गुडभुग् गुडभुगग्रो गुडाकेशवरप्रदः ।
गौडधरार्चितपदो गौडधराजयप्रदः ॥१५३॥

गौडायुधो गदापाणिर्गदायुद्धविशारदः ।
गदहा गदगर्वस्थो गदगर्वप्रणाशनः ॥१५४॥

गदग्रस्तपरित्राता गदातुरप्रखण्डकः ।
गौडप्रीतिकरो गूढो गूढगुप्तो गुणेश्वरः ॥१५५॥

गौडीव्यक्तिर्गिरीशानो गीर्देवगीतसद्गुणः ।
गीर्देवो गीर्ध्क्रियो गीर्भूर्गीरात्मा गीर्ध्प्रियङ्करः ॥१५६॥

गीर्भूमिर्गीर्यज्ञोऽथ स गीर्ध्प्रसन्नो गिरीश्वरः ।
गौडराजशिरःस्वामी गिरिराजसुखावहः ॥१५७॥

गिरिराजार्चितपदो गिरिराजनमस्कृतः ।
गिरिराजगुहाविष्टो गौडराजभयप्रदः ॥१५८॥

गौडव्रजवनस्थायी गौडव्रजचरः सदा ।
गौडो गौडप्रियो गौडदेवो गर्गनमस्कृतः ॥१५९॥

गौडभीतिभङ्गुरोऽथ गणितप्राज्ञः सर्वदा ।
गौडस्मयमयो गद्यपद्यविद्याविवेचकः ॥१६०॥

गललग्नमहानागो गणदण्डिगणप्रदः ।
गौडहृद् गौडदुःखार्तो गौडसृष्टिसुखप्रदः ॥१६१॥

गम्भीरनाभिर्गम्भीरस्वरो गम्भीरलोचनः ।
गम्भीरगुणसम्पन्नो गम्भीरगतिसेवनः ॥१६२॥

गर्भप्रदो गर्भरूपो गर्भापद्विनिवारकः ।
गर्भावसनसंत्रासो गर्भदो गर्भशोकहृत् ॥१६३॥

गौडत्राता गौडगोप्ता गौडसृष्टिकरः सदा ।
गौडाग्रजो गौडमयो गर्भवासनिवारकः ॥१६४॥

गौडाधारो गौडधरो गौडसन्तोपसाधकः ।
गौडस्तवातिसन्धानो साधनगर्भगर्वहृत् ॥१६५॥

गरीयान् गौडभृद् गर्वमहीधरविमर्दकः ।
गौडसन्तापशमनो गुरुराज्यसुखप्रदः ॥१६६॥

नाम्नां सहस्रं कथितं गौरचन्द्रप्रसादाय ।
गकारादिजगद्वन्द्यं गोपनीयं प्रयत्नतः ॥१६७॥
य इदं प्रयतः प्रातः त्रिसन्ध्यं वा पठेन्नरः ।
वाञ्छितं फलमाप्नोति नात्र कार्या विचारणा ॥१६८॥
पुत्रार्थी लभते पुत्रं धनार्थी धनवान् भवेत् ।
विद्यार्थी लभते विद्यां सत्यं सत्यं न संशयः ॥१६९॥
भूर्जपत्रे समालिख्य कुंकुमेन समाहितः ।
चतुर्थ्यां भौमवारे वा चन्द्रसूर्योपरागयोः ॥१७०॥
पूजयित्वा गौडाधीशं यथोक्तं विधिना पुनः ।
मूलं जपेद् यथाशक्त्या पूजयेच्च शमीदलैः ॥१७१॥
गौरं संपूज्य वस्त्राद्यैः कृत्वा चापि प्रदक्षिणम् ।
धारयेद् यः प्रयत्नेन स साक्षाद् गौरनायकः ॥१७२॥
सुरासुरवर्या अपि पिशाचाः किन्नरोरगाः ।
प्रणमन्ति सदा तं वै दृष्ट्वा विस्मितमानसाः ॥१७३॥
राजा सपदि वश्यः स्यात् कामिन्यस्तद्वशाः स्थिराः ।
तस्य वंशं स्थिरा लक्ष्मीः कदापि न विमुञ्चति ॥१७४॥
निष्कामो यः पठेदेतद् गौडेश्वरपरायणः ।
सः प्रतिष्ठां परां प्राप्य निजलोकमवाप्नुयात् ॥१७५॥
इदं ते कीर्तितं नाम्नां सहस्रं देवि ! पावनम् ।
न देयं कृपणायाथ शठाय गौरविद्विषे ॥१७६॥
इत्येवं भ्रंशमाप्नोति देवतायाः प्रकोपतः ।
इति श्रुत्वा महादेवाद्देवी विस्मितमानसा ।
पूजयामास विधिना गौडेश्वरपदद्वयम् ॥१७७॥

इति मोक्षार्णवतन्त्रे हरगौरीसंवादे गकारादिकं
श्रीगौरांगसहस्रनामस्तोत्रं सम्पूर्णम् ।

# श्रीकृष्णचैतन्यचन्द्रस्य सहस्रनामस्तोत्रम् (१) ।

नमस्तस्मै भगवते चैतन्याय महात्मने ।
कलिकल्मषनाशाय भवाब्धितारणाय च ॥ १ ॥

ब्रह्मणा हरिदासेन श्रीरूपाय प्रकाशितम् ।
तत्सर्वं कथयिष्यामि सावधानं निशामय ॥ २ ॥

श्रुत्वैवं वैष्णवाः सर्वे प्रहृष्टाः प्रेमविह्वलाः ।
सादरं परिपप्रच्छुः प्रेमगद्गदया गिरा ॥ ३ ॥

वैष्णवानां हि कृपया स्मृत्वा वाक्यं पितुस्तदा ।
संचिन्त्य भगवद्रूपं नामानि कथयामि वै ॥ ४ ॥

ॐ अस्य श्रीकृष्णचैतन्यसहस्रनामस्तोत्रस्य नारायणः ऋषिरनुष्टुप छन्दः श्रीमद्भगवद्भक्तिर्देवता श्रीराधाकृष्णप्रीतये श्रीकृष्णचैतन्य-नामसहस्रपाठे विनियोगः । ॐ नमः प्रेमसमुच्चयाय गोपीजन-वल्लभाय महात्मने ॥

ॐ विश्वम्भरः सदानन्दो विश्वजिद् विश्वभावनः ।
महानुभावो विश्वात्मा गौरांगो गौरभावनः ॥ ५ ॥

हेमप्रभो दीर्घबाहुर्दीर्घग्रीवः शुचिर्वसुः ।
चैतन्यश्चेतनश्चेताश्चित्तरूपी प्रभुः स्वयम् ॥ ६ ॥

राधाङ्गी राधिकाभावो राधान्वेषी प्रियंवदः ।
नीतिज्ञः सर्वधर्मज्ञो भक्तिमान् पुरुषोत्तमः ॥ ७ ॥

अनुभावी महाधैर्यः शास्त्रज्ञो नित्यनूतनः ।
प्रभावी भगवान् कृष्णश्चैतन्यो रसविग्रहः ॥ ८ ॥

अनादिनिधनो धाता धरणीमण्डनः शुचिः ।
वराङ्गश्चञ्चलो दक्षः प्रतापी साधुसङ्गतः ॥ ९ ॥

उन्मादी उन्मदो वीरो धीरग्राही रसप्रियः ।
रक्ताम्बरो दण्डधरः संन्यासी यतिभूषणः ॥१०॥

दण्डी छत्री चक्रपाणिः कृपालुः सर्वदर्शनः ।
निरायुधः सर्वशास्ता कलिदोषप्रणाशनः ॥११॥

गुरुवर्यः कृपासिन्धुर्विक्रमी च जनार्दनः ।
म्लेच्छग्राही कुनीतिघ्नो दुष्टहारी कृपाकुलः ॥१२॥

ब्रह्मचारी यतिवरो ब्रह्मण्यो ब्राह्मणः सुधीः ।
द्विजराजश्चक्रवर्ती कविः कृपणवत्सलः ॥१३॥

निरीहः पावकोऽर्थज्ञो निर्धूमः पावकोपमः ।
नारवंद्यो नराकारो भविष्णुर्नरनायकः ॥१४॥

दानवीरो युद्धवीरो दयावीरो वृकोदरः ।
ज्ञानवीरो महावीरो शान्तिवीरः प्रतापनः ॥१५॥

श्रीजिष्णुर्धर्मिको जिष्णुः सहिष्णुश्चारुदर्शनः ।
नरो वरीयान् दुर्दर्शो नवद्वीपसुधाकरः ॥१६॥

चन्द्रहास्यश्चन्द्रनखो वलिमदुदरो बली ।
सूर्यप्रभः सूर्यकांशुः सूर्याङ्गो मणिभूषणः ॥१७॥

कम्बुकण्ठः कपोलश्रीर्निम्ननाभिः सुलोचनः ।
जगन्नाथसुतो विप्रो रत्नाङ्गो रत्नभूषणः ॥१८॥

तीर्थार्थी तीर्थदस्तीर्थस्तीर्थाङ्गस्तीर्थसाधकः ।
तीर्थास्पदस्तीर्थवासस्तीर्थसेवी निराश्रयः ॥१९॥

तीर्थाह्लादी तीर्थप्रदो भ्रामको भ्रमणो भ्रमी ।
श्रीवासपण्डितानन्दो रामानन्दप्रियङ्करः ॥२०॥

गदाधरप्रियो दासविक्रमी शङ्करप्रियः ।
योगी योगप्रदो योगो योगकारी त्रियोगकृत् ॥२१॥

सर्वः सर्वस्वदो भूमा सर्वाङ्गः सर्वसंभवः ।
वाणिर्बाणायुधो वादी वाचस्पतिरयोनिजः ॥२२॥

बुद्धिः सत्त्वं बलं तेजो धृतिमान् जङ्गमाकृतिः ।
मुरारिर्वर्धनो धाता नृहरिर्मानवर्धनः ॥२३॥

निष्कर्मा कर्मदो नाथः कर्मज्ञः कर्मनाशकः ।
अनर्घः कारकः कर्मक्रियार्हः कर्मबाधकः ॥२४॥

निर्गुणो गुणवानीशो विधाता सामगोऽजितः ।
जितश्वासो जितप्राणो जितानङ्गो जितेन्द्रियः ॥२५॥

कृष्णभावी कृष्णनामी कृष्णात्मा कृष्णनायकः ।
अद्वैतो द्वैतसाहित्यो द्विभावः पालको वशी॥२६॥

श्रीवासः श्रीधराह्व्यो हलनायकसारवित् ।
विश्वरूपानुजश्चन्द्रो वरीयान् माधवोऽच्युतः ॥२७॥

रूपासक्तः सदाचारो गुणज्ञो बहुभावकः ।
गुणहीनो गुणातीतो गुणग्राही गुणार्णवः ॥२८॥

ब्रह्मानन्दो नित्यानन्दः प्रेमानन्दोऽतिनन्दकः ।
निंद्यहारी निंद्यवर्जी निंद्यघ्नः परितोषकः ॥२९॥

यज्ञबाहुर्विनीतात्मा नामयज्ञप्रचारकः ।
कलिवर्यः सुचीनांशुः पर्यांशुः पावकोपमः ॥३०॥

हिरण्यगर्भः सूक्ष्मात्मा वैराज्यो विरजापतिः ।
विलासी प्रभावी स्वांशी परावस्थः शिरोमणिः ॥३१॥

मायाघ्नो मायिको मायी मायावादी विचक्षणः ।
कृष्णाच्छादी कृष्णजल्पी विषयघ्नो निराकृतिः ॥३२॥

संकल्पशून्यो मायीशो मायाद्वेषी व्रजप्रियः ।
व्रजाधीशो व्रजपतिर्गोपगोकुलनन्दनः ॥३३॥

व्रजवासी व्रजभावो व्रजनायकसत्तमः ।
गुप्तप्रियो गुप्तभावो वाञ्छितः सत्कुलाश्रयः ॥३४॥

रागानुगो रागसिन्धू रागात्मा रागवर्धनः ।
रागोद्‌गतः प्रेमसाक्षी भट्टनाथः सनातनः ॥३५॥

गोपालभट्टगः प्रीतो लोकनाथप्रियः पटुः ।
द्विभुजः षड्‌भुजो रूपी राजदर्पविनाशनः ॥३६॥

काशीमिश्रप्रियो वंद्यो वन्दनीयः शचीप्रसूः ।
मिश्रपुरन्दराधीशो रघुनाथप्रियो रयः ॥३७॥

सार्वभौमदर्पहारी अमोघारिः वसुप्रियः ।
सहजः सहजाधीशः शाश्वतः प्रणयातुरः ॥३८॥

किलकिञ्चितभावार्तः पाण्डुगण्डः शुचातुरः ।
प्रलापी बहुवाक् शुद्धः ऋजुर्वक्रगतिः शिवः ॥३९॥

घट्टायितोऽरविन्दाक्षः प्रेमवैचित्त्यलक्षकः ।
प्रियाभिमानी चतुरः प्रियावर्ती प्रियोन्मुखः ॥४०॥

लोमाञ्चितः कंपधरः अश्रुमुखो विशोकहा ।
हास्यप्रियो हास्यकारी हास्ययुग् हास्यनागरः ॥४१॥

हास्यश्रामी हास्यकरस्त्रिभंगी नर्तनाकुलः ।
ऊर्ध्वलोमा ऊर्ध्वहस्तः ऊर्ध्वरावी विकारवान् ॥४२॥

मायाघ्नो मायिको मायी मायावादी विचक्षणः ।
कृष्णाच्छादी कृष्णजल्पी विषयघ्नो निराकृतिः ॥३२॥

संकल्पशून्यो मायीशो मायाद्वेषी व्रजप्रियः ।
व्रजाधीशो व्रजपतिर्गोपगोकुलनन्दनः ॥३३॥

व्रजवासी व्रजभावो व्रजनायकसत्तमः ।
गुप्तप्रियो गुप्तभावो वाञ्छितः सत्कुलाश्रयः ॥३४॥

रागानुगो रागसिन्धू रागात्मा रागवर्धनः ।
रागोद्गतः प्रेमसाक्षी भट्टनाथः सनातनः ॥३५॥

गोपालभट्टगः प्रीतो लोकनाथप्रियः पटुः ।
द्विभुजः षड्भुजो रूपी राजदर्पविनाशनः ॥३६॥

काशीमिश्रप्रियो वंद्यो वन्दनीयः शचीप्रसूः ।
मिश्रपुरन्दराधीशो रघुनाथप्रियो रयः ॥३७॥

सार्वभौमदर्पहारी अमोघारिः वसुप्रियः ।
सहजः सहजाधीशः शाश्वतः प्रणयातुरः ॥३८॥

किलकिञ्चितभावार्तः पाण्डुगण्डः शुचातुरः ।
प्रलापी बहुवाक् शुद्धः ऋजुर्वक्रगतिः शिवः ॥३९॥

घट्टायितोऽरविन्दाक्षः प्रेमवैचित्त्यलक्षकः ।
प्रियाभिमानी चतुरः प्रियावर्ती प्रियोन्मुखः ॥४०॥

लोमाञ्चितः कंपधरः अश्रुमुखो विशोकहा ।
हास्यप्रियो हास्यकारी हास्ययुग् हास्यनागरः ॥४१॥

हास्यश्रामी हास्यकरस्त्रिभंगी नर्तनाकुलः ।
ऊर्ध्वलोमा ऊर्ध्वहस्तः ऊर्ध्वरावी विकारवान् ॥४२॥

भावोल्लासी धीरशान्तो धीराङ्गो धीरनायकः ।
देवास्पदो देवधामा देवदेवो मनोभवः ॥४३॥

हेमाद्रिर्हेमलावण्यः सुमेरुर्ब्रह्मसादनः ।
ऐरावतस्वर्णकान्तिः शरघ्नो वाञ्छितप्रदः ॥४४॥

करभोरूः सुदीर्घाक्षः कम्पभ्रूचक्षुनासिकः ।
नामग्रन्थी नामसंख्याभावबद्धस्तृषाहरः ॥४५॥

पापाकर्षी पापहारी पापघ्नः पापशोधकः ।
दर्पहा धनदोऽरिघ्नो मानहा रिपुहा मधुः ॥४६॥

रूपहा वेशहा दिव्यो दीनबन्धुः कृपामयः ।
सुधाक्षरः सुधास्वादी सुधामा कमनीयकः ॥४७॥

निर्मुक्तो मुक्तिदो मुक्तो मुक्ताख्यो मुक्तिबाधकः ।
निःशङ्को निरहङ्कारो निर्वैरो विपदापहः ॥४८॥

विदग्धो नवलावण्यो नवद्वीपद्विजः प्रभुः ।
निरंकुशो देववंद्यः सुराचार्यः सुरारिहा ॥४९॥

सुरवर्यो निंद्यहारी वादघ्नः परितोषकः ।
सुप्रकाशो बृहद्बाहुर्मित्रज्ञः कविभूषणः ॥५०॥

वरप्रदो वरापाङ्गो वरयुग् वरनायकः ।
पुष्पहासः पद्मगन्धिः पद्मरागः प्रजागरः ॥५१॥

ऊर्ध्वगः सत्पथाचारी प्राणद ऊर्ध्वगायकः ।
जनप्रियो जनाह्लादो जनाकर्षी जनस्पृहः ॥५२॥

अजन्मा जन्मनिलयो जनानन्दो जनार्द्रधीः ।
जगन्नाथो जगद्बन्धुर्जगद्देवो जगत्पतिः ॥५३॥

जनकारिजनामोदो जनकानन्दसाग्रह: ।
कलिप्रिय: कलिश्लाघ्य: कलिमान-विवर्धन: ॥५४॥

कलिवर्य: सदानन्द: कलिकृत् कलिधन्यमान् ।
वर्धमान: श्रुतिधर: वर्धनो वृद्धिदायक: ॥५५॥

संपद: शरणो दक्षो घृणाङ्गी कलिरक्षक: ।
कलिधन्य: समयज्ञ: कलिपुण्यप्रकाशक: ॥५६॥

निश्चिन्तो धीरललितो धीरवाक् प्रेयसीप्रिय: ।
वामास्पर्शी वामभावो वामरूपो मनोहर: ॥५७॥

अतीन्द्रिय: सुराध्यक्षो लोकाध्यक्ष: कृताकृत: ।
युगादिकृद् युगकरो युगज्ञो युगनायक: ॥५८॥

युगावर्तो युगासीम: कालवान् कालशक्तिधृक् ।
प्रणय: शाश्वतो हृष्टो विश्वजिद् बुद्धिमोहन: ॥५९॥

संध्याता ध्यानकृद् ध्यानी ध्यानमङ्गलसन्धिमान् ।
विश्रुतात्मा हृदि स्थिरग्रामणीयप्रग्राहक: ॥६०॥

स्वरमूर्च्छी स्वरालापी स्वरमूर्तिर्विभूषण: ।
गानग्राही गानलुब्धो गायको गानवर्धन: ॥६१॥

गानमान्यो ह्यप्रमेय: सत्कर्ता विश्वधृक् सह: ।
क्षीराब्धिकमठाकार: प्रेमगर्भझषाकृति: ॥६२॥

बीभत्सुर्भावहृदय: अदृश्यो बर्हिदर्शक: ।
ज्ञानरुद्धो धीरबुद्धिरखिलात्मप्रिय: सुधी: ॥६३॥

अमेय: सर्वविद् भानुर्बभ्रूर्बहुशिरो रुचि: ।
उरुश्रवा: महादीर्घो वृषकर्मा वृषाकृति: ॥६४॥

श्रुतिस्मृतिधरो वेदः श्रुतिज्ञः श्रुतिबाधकः ।
हृदिस्पृश आस आत्मा श्रुतिसारो विचक्षणः ॥६५॥

कलापी निरनुग्राही वैद्यविद्याप्रचारकः ।
मीमांसकारिर्वेदाङ्गवेदार्थप्रभवो गतिः ॥६६॥

परावरज्ञो दुष्पारो विरहाङ्गी सतां गतिः ।
असंख्येयोऽप्रमेयात्मा सिद्धिदः सिद्धिसाधनः ॥६७॥

धर्मसेतुर्धर्मपरो धर्मात्मा धर्मभावनः ।
उदीर्णसंशयच्छिन्नो विभूतिः शाश्वतः स्थिरः ॥६८॥

शुद्धात्मा शोभनोत्कण्ठोऽनिर्देश्यः साधनप्रियः ।
ग्रन्थप्रियो ग्रन्थमयः शास्त्रयोनिर्महाशयः ॥६९॥

अवर्णी वर्णनिलयो नाश्रमी चतुराश्रमः ।
अविप्रो विप्रकृत्तुल्यो राजन्यो राज्यनाशकः ॥७०॥

अवश्यो वश्यताधीनः श्रीभक्तिव्यवसायकः ।
मनोजवः पूरयिता भक्तिकीर्तिरनामयः ॥७१॥

निधिवर्जी भक्तिनिधिदुर्लभो दुर्गभावकृत् ।
कर्ता नीः कीर्तिरतुलः अमृतो मुरजप्रियः ॥७२॥

शृङ्गारः पञ्चमो भावो भावयोनिरनन्तरः ।
भक्तिजित् प्रेमभोजी च नवभक्तिप्रचारकः ॥७३॥

त्रिगर्तस्त्रिगुणामोदस्त्रिवाञ्छी प्रीतिवर्धनः ।
नियन्ता श्रमगोऽतीतः पोषणो विगतज्वरः ॥७४॥

प्रेमज्वरो विमानार्हः अर्थहा स्वप्ननाशनः ।
उत्तारणो नामपुण्यः पापपुण्यविवर्जितः ॥७५॥

अपराधहरः पाल्यः स्वस्तिदः स्वस्तिभूषणः ।
पूतात्मा पूतगः पूतः पूतभावो महास्वनः ॥७६॥

क्षेत्रज्ञः क्षेत्रविजयी क्षेत्रवासो जगत्प्रसूः ।
भयहा भयदो भास्वान् गौणभावसमन्वितः ॥७७॥

मण्डितो मण्डलकरो वैजयन्तीपवित्रकः ।
चित्राङ्गश्चित्रितश्चित्रो भक्तचित्तप्रकाशकः ॥७८॥

बुद्धिगो बुद्धिदो बुद्धिबुर्द्धिधृग् बुद्धिवर्धनः ।
प्रेमाद्रिधृक् प्रेमवहो रतिवोढा रतिस्पृशः ॥७९॥

प्रेमचक्षुः प्रेमगन्धः प्रेमहृत् प्रेमपूरकः ।
गंभीरगो बहिर्वासो भावानुष्ठितगोपतिः ॥८०॥

नैकरूपो नैकभावो नैकात्मा नैकरूपधृक् ।
श्लथसन्धिः क्षीणधर्मस्त्यक्तपाप उरुश्रवाः ॥८१॥

उरुगाय उरुग्रीव उरुभाव उरुक्रमः ।
निर्धूतो निर्मलो भावो निरीहो निरनुग्रहः ॥८२॥

निर्धूमोऽग्निः सुप्रतापस्तीव्रतापो हुताशनः ।
एको महद्भूतव्यापी पृथग्भूतः अनेकशः ॥८३॥

निर्णयी निरनुज्ञातो दुष्टग्रामनिवर्तकः ।
विप्रबन्धुः प्रियो रुच्यो रोचकाङ्गो नराधिपः ॥८४॥

लोकाध्यक्षः सुवर्णाभः कनकाब्जः शिखामणिः ।
हेमकुंभो धर्मसेतुर्लोकनाथो जगद्गुरुः ॥८५॥

लोहिताक्षो नामकर्मा भावस्थो हृद्गुहाशयः ।
रसप्राणो रतिज्येष्ठो रसाब्धिरतिराकुलः ॥८६॥

भावसिन्धुर्भक्तिमेघो रसवर्षी जनाकुलः ।
पीताब्जो नीलपीताभो रतिभोक्ता रसायनः ॥८७॥

अव्यक्तः स्वर्णराजीवो विवर्णी साधुदर्शनः ।
अमृत्युः मृत्युदोऽरुद्धः सन्धाता मृत्युवञ्चकः ॥८८॥

प्रेमोन्मत्तः कीर्तनार्तः संकीर्तनपिता सुरः ।
भक्तिग्रामः सुसिद्धार्थः सिद्धिदः सिद्धिसाधनः ॥८९॥

प्रेमोदरः प्रेमवाही लोकभर्ता दिशांपतिः ।
अन्तःकृष्णो बहिर्गौरो दर्शको रतिविस्तरः ॥९०॥

संकल्पसिद्धो वाञ्छात्मा अतुलः सच्छरीरभृत् ।
ऋद्धार्थः करुणापाङ्गो नादकृद् भक्तवत्सलः ॥९१॥

अमत्सरः परानन्दः कौपीनी भक्तिपोषकः ।
अकैतवो नाममाली वेगवान् पूर्णलक्षणः ॥९२॥

मिताशनो विवर्ताक्षो व्यवसायाव्यवस्थितः ।
रतिस्थानो रतिवरः पश्चात्तुष्टः शमाकुलः ॥९३॥

क्षोभणो विरभो मार्गी मार्गदृग् वर्त्मदर्शकः ।
नीचाश्रमी नीचमानी विस्तारो बीजमव्ययः ॥९४॥

महाकायः सूक्ष्मगतिर्महेज्यः सत्रवर्धनः ।
सुमुखः स्वापनोऽनादिः सुकृत् पापविदारणः ॥९५॥

श्रीनिवासो गभीरात्मा शृङ्गारकनकादृतः ।
गभीरो गहनो वेधा साङ्गोपाङ्गो वृषप्रियः ॥९६॥

उदीर्णरागो वैचित्री श्रीकरः स्तवनार्हकः ।
अश्रुचक्षुर्जलाभ्यङ्गपूरितो रतिपूरकः ॥९७॥

स्तोत्रायणः स्तवाध्यक्षः स्तवनीयः स्तवाकुलः ।
ऊर्ध्वरेताः सन्निवासः प्रेममूर्तिः शतानलः ॥९८॥

भक्तबन्धुर्लोकबन्धुः प्रेमबन्धुः शताकुलः ।
सत्यमेधा श्रुतिधरः सर्वशास्त्रभृतांवरः ॥९९॥

भक्तिद्वारो भक्तिगृहः प्रेमागारो निरोधहा ।
उद्घूर्णो घूर्णितमना आघूर्णितकलेवरः ॥१००॥

भावभ्रान्तिजसन्देहः प्रेमराशिः शुचापहः ।
कृपाचार्यः प्रेमसङ्गो वयुनः स्थिरयौवनः ॥१०१॥

सिन्धुगः प्रेमसंगाहः प्रेमवश्यो विचक्षणः ।
पद्मकिञ्जल्कसंकाशः प्रेमाधारो नियामकः ॥१०२॥

विरक्तो विगतारातिर्नीरपेक्षो नारदादृतः ।
नतस्थो दक्षिणः क्षामः शठजीवप्रतारकः ॥१०३॥

नामप्रवर्तकोऽनर्थो धर्मगुर्वादिपुरुषः ।
न्यग्रोधो जनको जातो वैनत्यो भक्तिपादपः ॥१०४॥

आत्ममोहः प्रेमलीढः आत्मभावानुगो विराट् ।
माधुर्यवित् स्वात्मरतो गौराख्यो विप्ररूपधृक् ॥१०५॥

राधारूपी महाभावी राध्यो राधनतत्परः ।
गोपीनाथात्मकोऽदृश्यः स्वाधिकारप्रसाधकः ॥१०६॥

नित्यास्पदो नित्यरूपी नित्यभावप्रकाशकः ।
सुस्थभावश्चपलधीः स्वच्छगो भक्तिपोषकः ॥१०७॥

सर्वत्रगस्तीर्थभूतो हृदिस्थः कमलासनः ।
सर्वभावानुगाधीशः सर्वमङ्गलकारकः ॥१०८॥

इत्येतत् कथितं नित्यं साहस्रं नामसुन्दरम् ।
गोलोकवासिनो विष्णोर्गौररूपस्य शार्ङ्गिणः ॥१०९॥

इदं गौरसहस्राख्यमामयघ्नं शुचापहम् ।
प्रेमभक्तिप्रदं नृणां गोविन्दाकर्षकं परम् ॥११०॥

प्रातःकाले च मध्याह्ने सन्ध्यायां मध्यरात्रिके ।
यः पठेत् प्रयतो भक्त्या चैतन्ये लभते रतिम् ॥१११॥

नामात्मको गौरदेवो यस्य चेतसि वर्त्तते ।
स सर्वं विषयं त्यक्त्वा भावानन्दो भवेद्ध्रुवम् ॥११२॥

यस्मै कस्मै न दातव्यं दाने तु भक्तिहा भवेत् ।
विनीताय प्रशान्ताय गौरभक्ताय धीमते ।
तस्मै देयं ततो ग्राह्यं इति वैष्णवशासनम् ॥११३॥

इति श्रीकविकर्णपूरविरचितं श्रीकृष्णचैतन्यचन्द्रस्य
सहस्रनामस्तोत्रं (१) संपूर्णम् ।

# श्रीकृष्णचैतन्यचन्द्रस्य सहस्रनामस्तोत्रम् (२) ।

निसर्ग-दुर्बोध-निजप्रभाव-विमोहिताशेषजनो गभीरः ।
शचीस्तन-क्षीरसुधाशमत्तः कवीन्द्रपारीन्द्रसहस्रविक्रमः ॥१॥

निरस्तमायावरण-निजदेह-प्रकाशकृत् ।
गौडदेश-जनासंख्य-पुण्यसार-समुच्चयः ॥ २ ॥

आद्यन्तमध्यरहितस्तारुण्य-प्रस्फुरद्वपुः ।
अदोषदर्शी सौन्दर्य-धैर्य-गाम्भीर्य-शौर्यवान् ॥ ३ ॥

द्विजराज–जगन्नाथ–द्विजराजगुणात्मजः ।
शचीजठररत्नाब्धि–महारत्नं गुणार्णवः ॥ ४ ॥

नवद्वीपशिशुक्रीडापरः शैशवविभ्रमः ।
पदांभोजाङ्कित–शचीगेह–क्रीडापरायणः ॥ ५ ॥

शचीस्मेरे–कृतस्मेरः शचीरोदन–रोदनः ।
औग्रक्रीडनकोद्विग्न–शचीशिक्षास्मिताननः ॥ ६ ॥

काकपक्षधरो धूलिधूसरः स्वेदवन्मुखः ।
क्रीडाश्रान्तिस्खलद्रुद्धधटिव्यक्तलसत्कटिः ॥ ७ ॥

श्लथद्रुन्धधटीलम्ब–केशव्यग्रकराम्बुजः ।
लोलालकः पञ्चजूटः प्रतिवेशिगृहप्रियः ॥ ८ ॥

जगन्नाथकरालम्बी जगन्नाथसुखप्रदः ।
तद्विश्रुत–रक्तपाद–मञ्जुमञ्जीरसिञ्जितः ॥ ९ ॥

सप्त–पञ्चार्भकाक्रीडी लम्बकेशाकुलेक्षणः ।
ध्वजाङ्कित–पदालक्ष्य–बालकान्वेष्य–पद्धतिः ॥१०॥

मुरारिगुप्त–करुणाकृत–तद्वेश्म–खेलनः ।
मुरारिगुप्तभवन–क्रीडाताण्डवपण्डितः ॥११॥

स्वमायामुग्ध–चौरासंगतः सर्वसुखावहः ।
शिशुक्रीडाचलत्पाद–रणत्कनकनूपुरः ॥१२॥

अदृष्टाश्रुतचाञ्चल्य–शचीविस्मयकारकः ।
अलब्धभक्ष्य–सामर्षो भग्नकुम्भान्नभाजनः ॥१३॥

मधुरोक्तिरञ्जिताम्बामार्जितनिजदोषसञ्चयश्चतुरः ।
पूर्वावतार-निजजन-संभ्रमकारी निगूढनिजभावः ॥१४॥

भ्रमणपरः पटुधावनशब्दित-मणिकिङ्किणीजालः ।
अम्बाकौतुकवर्धनताण्डवलीला-गतिर्मायी ॥ १५ ॥

मोहनखेलाविकल-स्वाम्बात्यक्तेतिकर्तव्यनिचयः ।
प्रतिपदताण्डवलीलः पावित-मोहिताङ्कितक्षौणिः ॥१६॥

गंगातीर-विहारी निजजन-नयनोत्सवाक्रीडः ।
गंगातरङ्गशीकर-सेवनकुतुकी दरस्मेरः ॥१७॥

वालुकातटनटो नटवेशो वालुकानिचयखेलनोत्सुकः ।
अच्छवालुकातटतद्देशोद्वीक्षणास्तिमितविस्तृतेक्षणः ॥१८॥

धावमानशिशुसङ्घसङ्गतः शैशवोचितमनोहरवेशः ।
बालयुद्ध-परिहासलम्पटश्चित्तविभ्रमविमोहितबालः ॥१९॥

पादलम्बिधटिकाञ्चलश्चलत्पुष्पदामविभूषितचूडः ।
वर्तुलायतसुचारुनितम्बश्चित्रनाट्यमहितांघ्रिपंकजः ॥२०॥

भूरिकाल-विरहातुरगङ्गा-नूतनीकृत-पदाम्बुजसङ्गः ।
वालुकानिचय-पादविक्रम-स्थाणुपादसरसीरुहचिह्नः ॥२१॥

स्थूलसूक्ष्म-पतगांघ्रिलक्षणप्रेक्षणातिकुतुकी तरलाक्षः ।
पंक्तिभागपर-पक्षिगणांघ्र्युद्देशधावनपरो दरस्मितः ॥२२॥

मज्जनार्थगतमातृविलोकप्राप्तभीतिभरलब्धसमीपः ।
धावनभ्रमणताण्डवलीला-कौतुकातिसुखविस्मृतगेहः ॥२३॥

कृतस्नान-शचीस्पर्श-दोष-हर्ष-परायणः ।
पाकस्थाली-स्पर्शहर-शचीचुम्बन-भाजनम् ॥२४॥

स्तनपान-क्षणस्मेर-मातृमोदकराननः ।
वस्त्रगुप्तामरार्चार्ह-शर्करागुटिकाग्रहः ॥२५॥

कालवर्धिततनुद्युतिव्रज-प्रस्फुरन्मधुरिमाच्छटाश्रयः ।
तातवाक्य-परिशीलनधीरः सुन्दराम्बरधरः स्थिरबुद्धिः ॥२६॥

निजकुलसमुचितविद्या-परिशीलनमाधुरीचतुरः ।
गंगादास–महाशय–गुरुत्व–विख्यापनाभिज्ञः ॥२७॥

उपनतशतशतशिष्यप्रधानभूतः स्फुरन्मेधः ।
विशदार्थ–बोधकारी शिष्यगणोद्गीतबहुमानः ॥२८॥

मध्यनीलमणिस्वर्णहारो रजतहारवान् ।
विश्वरूपानुजः सन्ध्यवतारः सुरचेष्टितः ॥२९॥

विद्याभ्यासश्लथासक्तिः स्फुरिताशेषदर्शनः ।
वयस्यगणसंसर्ग–परिहासपरायणः ॥३०॥

परिहास–रसावेश–विस्मापितसभाजनः ।
परिहासकथाभङ्गीहासितानुगतगुरुः ॥३१॥

गुरुभक्तिपरायणः सुशीलः सहजानन्दसुधामहाम्बुधीन्दुः ।
अनिरूपितरूपयौवनश्रीः परमानन्दरसायनः सुधीरः ॥३२॥

शंख–चक्र–गदाम्भोज–वज्राङ्कितपदाम्बुजः ।
सर्वलक्षण–सम्पन्नतनुः सर्वगुणाश्रयः ॥३३॥

अंगप्रत्यंगचक्रादि भक्तदेह–प्रकल्पनः ।
क्रीडाकलाबद्धसङ्ग–पण्डितश्रीगदाधरः ॥३४॥

शचीजठरसम्भूतः शचीक्रोडविभूषणः ।
नानामणिगणप्रोत–हेमकुण्डलमण्डितः ॥३५॥

रक्तहेमाम्बुजपदः पद्मपत्रविलोचनः ।
अशेषशास्त्रज्ञानार्कः शुद्धबुद्धि–विशारदः ॥३६॥

अधीतसर्वविद्यश्च सदुपाध्यायसम्मतः ।
दृष्टश्रुताधीतशास्त्रव्याख्याता लोकपूजितः ॥३७॥

गुरुव्याख्यातशास्त्रार्थनानावर्त्मप्रदर्शकः ।
सर्वशास्त्रनिगूढार्थ-व्याख्याकृत् स्वप्रकाशकः ॥३८॥

आकस्मिकप्रेमधारा-मातृविस्मयकारकः ।
मिलितानेकसच्छिष्य-नित्याध्यापन-तत्परः ॥३९॥

कन्याग्रहण-कारुण्य-पावितश्रीसनातनः ।
स्वयंगृहीतभगिनीगङ्गान्तर्जलदायकः ॥४०॥

कालप्राप्त-जगन्नाथ-स्वपदाम्बुनदीददः ।
कृतशोको लोकपरो विषण्णमुखपङ्कजः ॥४१॥

अशेषद्रव्यसम्भार-निर्वाहितपितृक्रियः ।
दानपूजितभूदेव-पापदैन्यविनाशनः ॥४२॥

सम्मानितानेक विप्रः प्रीणिताशेषसज्जनः ।
भोजिताशेषभूदेवो विनीतो नयभूषणः ॥४३॥

शचीप्रियः शचीपुत्रः शचीत्राण-परायणः ।
लोकशिक्षाविधानार्थ-कृष्णनामप्रगायनः ॥४४॥

अम्बाश्रुताग्रजकथः सदाग्रजपरायणः ।
अग्रजान्वेषणपरो गयाविजयसादरः ॥४५॥

अश्रुताग्रजवृत्तान्तो न दृष्टाग्रजपद्धतिः ।
अदृष्टभ्रातृदुःखार्तो निजमाया-प्रकाशकः ॥४६॥

श्रीमदीश्वरपुरी-कथान्तरस्मारिताग्रजनि-पूर्ववैभवः ।
श्रीमदीश्वरपुरीस्तुतिपाठकलनोच्छलितप्रेमसागरः ॥४७॥

आत्मविस्मृतिकरात्मशैशवः प्रेमभक्तिविदितात्मवैभवः ।
नोदितार्थदिनरात्रिविचारः सुप्तिभुक्तिरहितः स्फुटकान्तिः ॥४८॥

कोटिकोटिकमलाश्रितदेहः कोटिकोटिकमलाप्रकाशकृत् ।
कोटिकोटिरविदुःसहतेजाः कोटिकोटिशशिनिर्मलकान्तिः ॥४९॥

त्यक्तेश्वरपुरीसङ्ग – क्षुब्धातिक्षुब्धमानसः ।
भक्तिप्रख्यापनाचार्यः शचीस्नेहभरालसः ॥५०॥

क्षणदिनमुहूर्त–समुदित–मधुरमहावेशविस्मिताशेषः ।
अतिमृदुसुमधुरकान्तिः सुचारुवेशो नटानन्दः ॥५१॥

निरवधिकृतजनसंगोत्कीर्तन–निहितात्मसम्पत्तिः ।
स्वपदप्रवर्तितजगज्जनताविख्यातलसत्कीर्तिः ॥५२॥

पूर्वप्रथितभातृश्रीमन्नित्यानन्दशुभागमः ।
लब्धावधूतसङ्गः स्वयशःप्रख्यापनप्रयतः ॥५३॥

मिलितावधूत–ताण्डव–महः–प्रकाशितकृपाजलधिः ।
उभयप्रकाशमोहित–सकल–नवद्वीपनेत्रवल्लोकः ॥५४॥

पूर्ववर्ति–निजसत्कथारसप्रीतिगान–परितोषितानुगः ।
नागरीजनदृगन्तपातजस्नेहहर्षपुलकातिलज्जितः ॥५५॥

श्रीनारदश्रीनिवासपण्डितस्तुतिमोदकृत् ।
श्रीचन्द्रशेखरागारसुखक्रीडा–परायणः ॥५६॥

अमलः कमलानाथो गोपीनामस्मिताननः ।
गीतताण्डववैदग्ध्य–चातुर्य–रससागरः ॥५७॥

चतुःषष्टिकलानाथो गोपीनामनताननः ।
निजगोकुलवैदग्ध्यप्रकाशी निजभक्तिमान् ॥५८॥

तरुणारुणसच्छायदुकूलोज्ज्वलविग्रहः ।
अशेषभावचतुरो भावास्वादनलालसः ॥५९॥

कुमारलीलः कुतुकी परिहासकलागुरुः ।
ऊर्ध्वबद्धस्थूलजूटः सर्वशास्त्रबृहस्पतिः ॥६०॥

ताण्डवोल्लासितश्रीमच्चरणाम्बुजभूषणः ।
कोटिकन्दर्पलावण्यः कोटिकन्दर्पसुन्दरः ॥६१॥

भक्तभावरसास्वादगुप्तरासविशारदः ।
कोटिकन्दर्पसूः श्रीमान् कोटिकन्दर्पनागरः ॥६२॥

संसारोत्तापनिस्तारी मायानाशकरोदयः ।
सुचारुवदनः कञ्जलोचनः क्लेशमोचनः ॥६३॥

लावण्यसारसर्वस्व-प्रादुर्भूतलसद्वपुः ।
ब्रह्माण्डकोटिलावण्यसारसञ्चयलाञ्छितः ॥६४॥

अलेख्यस्वर्गपीयूषसारशीतलभाषणः ।
सिंहचारुलसद्ग्रीवः कम्बुचारुसुकंठवान् ॥६५॥

विशालभालविभ्राजच्चन्दनालेपमोहनः ।
कपोलमण्डलद्वन्द्वविभ्राजन्मणिकुण्डलः ॥६६॥

अरुणाधरविभ्राजन्मन्दहाससुधाश्रयः ।
मृदुहासदरव्यक्तदन्तद्योतितदिङ्मुखः ॥६७॥

अरुणोष्ठचारुसौष्ठवनिन्दितमुखजातपक्वबिम्बश्रीः ।
श्रवणविभूषणमणिमयकुण्डलयुगलच्छटाघटाकामभृत् ॥६८॥

कोटिसुधानिधिघटितवर्तुलसाह्लादसीधुमद्वदनः ।
कुटिलकटाक्षोदयावनद्धनवद्वीपनागरीनिकरः ॥६९॥

मदमत्तवारणेन्द्रप्रतिमगतिः सिंहशावकोजस्वी ।
काञ्चननिर्मितमणिमयनूपुरनादाहृताङ्गनानिवहः ॥७०॥

अरुणधटिकटिभूषणस्ताण्डवपाण्डित्यशिक्षिताशेषः ।
विस्तृतललितसुकोमलपादाम्बुजमाधुरीसिन्धुः ॥७१॥

स्वर्णप्रवालगुम्फितमध्यमणिस्फीतहार लसद्वक्षः ।
पल्लवमृदुतरकरतलकलितलक्ष्यनामजपलीलः ॥७२॥

दयाप्रेमार्द्रहसितवितीर्णप्रेमसागरः ।
कृपामधुरदृक्पातवशीकृतजगज्जनः ॥७३॥

अङ्गलेपमृगनाभिललितो भावसूचकदृगञ्चलपातः ।
[illegible] । वकारी हासभास्वरमुखाम्बुजद्युतिः ॥७४॥

पूगपुञ्जपरिपूर्णमुखश्रीः स्वेदकारिमहितोरुनासिकः ।
तत्तदद्भुतरहस्यशीलनः प्रान्तरक्तपरिवेष्टिताम्बरः ॥७५॥

कर्पूरागुरुकस्तुरीगन्धपूरितदिङ्मुखः ।
सुवृत्तदीर्घदोर्दण्डलसत्कनककंकणः ॥७६॥

सुवर्ण–वर्ण–कण्ठस्थस्वर्णहारविभूषितः ।
प्रेमाश्रुधौतसर्वाङ्गस्फुरन्निर्मलकान्तिभृत् ॥७७॥

नवस्फुरितबन्धूकबन्धुराधरपल्लवः ।
पद्मरागमणिन्यस्तमुक्तास्वच्छरदच्छविः ॥७८॥

सुचारुकेशः सुमुखो हेमस्फुरितनासिकः ।
धनुर्ध्वजादिसम्पन्नपाणिव्यक्तयवांगुलिः ॥७९॥

अशेषदेहसौन्दर्य–कोटिकन्दर्पनिन्दकः ।
अशेषगुणसम्पत्तिः सर्वलोकोपकारकः ॥८०॥

सुगुम्फश्चारुचलनः सुकोमलपदाम्बुजः ।
आत्मारामेश्वरोन्मादि–राधावेशमनोहरः ॥८१॥

नागरीनयनानन्द–मन्दहाससुधाकरः ।
मनोरथपराभीष्ट–संसूचकनिरीक्षणः ॥८२॥

भावप्रभूतप्रमदासाकूतेक्षणपण्डितः ।
अत्यन्तप्रेमसंरंभबलवद्दृढहासभृत् ॥८३॥

प्रेमप्रकाशविस्तीर्णसिंहनादसमस्वनः ।
कोटिसूर्यप्रतीकाश–सुमाधुर्यारुणांशुकः ॥८४॥

सुदुर्धर्ष–सुदुर्दर्श–प्रेमारंभमहोदयः ।
सुदर्शनपराशेषमङ्गलप्रेमऋद्धिदः ॥८५॥

प्रेमाश्रुविगलद्धारोगलन्निष्ठीवनाम्बुधिः
गलद्घर्मार्द्रवसनः स्रवदुत्फुल्लनासिकः ॥८६॥

घनशीत्कारवान् जृम्भावान् घनश्वासवान् मुहुः ।
घनहासः स्वपार्श्वस्थ–तत्कालप्रेमदायकः ॥८७॥

प्रेमप्रोद्यत्सिंहनादशङ्कितीकृतदिग्गजः ।
अनवच्छिन्नपुलको मनःकम्पः स्थिरासनः ॥८८॥

वामपार्ष्णिकराघातकृष्णोऽहमितिसूचकः ।
एकद्वित्रदिनव्यापि प्रेमारंभमहोत्सवः ॥८९॥

त्रयोविंशादिनव्यापि–प्रेमहासप्रकाशकृत् ।
त्रिकोणचिबुकः शुष्कनिमीलितमुखस्मितः ॥९०॥

त्रिवलीवलितः श्रीमद्दीर्घस्थूलशिरोधरः ।
केशविन्यास–संबद्ध–मालतीमाल्यमण्डितः ॥९१॥

ललितांगुलिविभ्राजन्मणिकाञ्चनमुद्रिकः ।
गभीरारक्तमावर्त-नाभिमन्मथटीधरः ॥९२॥

समानवक्षोजघनो वर्तुलोरुः सुगुल्फवान् ।
चारुजानुश्चारुजङ्घः सुकोमलपदाम्बुजः ॥९३॥

हयग्रीवो मणिग्रीवः सुन्दरस्पर्शकेशभृत् ।
कमलाश्लेषरसिकः कमलास्तनचन्दनः ॥९४॥

कमलाहृदयानन्दः कमलानयनाञ्जनः ।
त्रिवली-विलसन्मध्यः सिंहमध्यः स्मरालसः ॥९५॥

सुपीन-वर्तुल-स्निग्ध-क्रमस्थूलमहाभुजः ।
करिशुण्डाकृतिभुजो नामासक्तकरांगुलिः ॥९६॥

स्फुरन्नखमणिश्रेणीमिश्रांशुकरपल्लवः ।
लावण्यसारसर्वांगश्चन्दनाञ्चितविग्रहः ॥९७॥

प्रत्यंगरभसावेशप्रभवानन्दबन्धुरः ।
स्वभावशीतलः प्रेमदर्शितानेकपौरुषः ॥९८॥

सदाप्रेमभराक्रान्तसर्वाङ्गो गतिमन्थरः ।
आभंगुरभ्रूयुगलः ईषदारक्तलोचनः ॥९९॥

घूर्णायमाननयनः पूर्णचन्द्रामलाननः ।
बहिः श्यामायतस्थूलचमत्कारिकनीनिकः ॥१००॥

कर्णान्तायत-दृक्पात-हेलालावण्यसूचकः ।
भाववान् स्वगुणालाप-जगतीभावदायकः ॥१०१॥

श्रोत्रानन्द-यशोराशिर्नेत्रानन्दतनुच्छविः ।
घ्राणानन्दलसद्गन्धः हृदयानन्द-सद्गुणः ॥१०२॥

अमृतस्रावि-दृक्पातः सुधासारार्द्रसंकथः ।
अमृतोद्गारिसद्वेणुसुधास्यन्दिकलस्वनः ॥१०३॥

रसनामृतसंभुक्तः स्पर्शामृतकराम्बुजः ।
केशामृतलसन्मूर्धा प्रकाशामृतदेहधृक् ॥१०४॥

अनन्यसाधारणरूपयौवनः शचीतनुप्राणमनोऽक्षिरञ्जनः ।
अशेषलोकोत्सवसारदर्शनः समस्तलोकाभ्युदयोरुसद्गुणः॥

यज्ञोपवीतधारी द्विधा विवाहोत्सवे कुतुकी ।
अखिलविनोदविदग्धः कमलालावण्यमाधुरीमुग्धः ॥१०६॥

आचमनागतकमलास्मितसंमुखमार्जनारसिकः ।
निजकर्णाहितचम्पककलिका-कर्णार्पणप्रसादपरः ॥१०७॥

कमलापितृगृहभोजनविनोदकारी विनोदमयदेहः ।
अनुगतकमलाजनतानिर्मितकौतुककलितकृपामधुरः ॥१०८॥

परिहास्यजनोपहासकः प्रणयाधीनजनाङ्कसुप्तदेहः ।
परिहास्यजनोपहसितः सकलानन्दमयकुटुम्बलोलः ॥१०९॥

वर्त्मवीक्षितपदाम्बुजचिह्नः स्निग्धदृष्टिमिलिताखिललोकः ।
तन्मुखाकलनविस्मितलोकः स्निग्धवीक्षणचकोरनिपीतः ॥११०॥

भग्नावधूतदण्डप्रकटकपटक्रोधोऽन्तरानन्दः ।
गोकुलवर्त्मविहारी निजपार्षदश्रमनिरासी च ॥१११॥

भारतीकेशवप्रेमकृष्णनामवरप्रदः ।
जगन्नाथकुलानन्दः शचीकुलविभूषणः ॥११२॥

श्रीसार्वभौमविश्वासकृत्तत्स्थाल्यन्नभोजनः ।
कोमलांघ्रितलो दूरीभूतसङ्गिगणाग्रणीः ॥११३॥

पीततक्रपरिपूरितरत्नस्तोमकुम्भयुगतोषितगोपः ।
प्रीतिमज्जनविनोदितुरीयप्रेमभक्तिदकृपाविजयिश्रीः ॥११४॥

निजसंगिगणश्रान्तिनाशकश्रीमुखाम्बुजः ।
घनपल्लवितस्निग्धनवशाखिकुलाश्रयः ॥११५॥

श्रमोषितानुगस्वेच्छामण्डलीगणमध्यगः ।
स्वपादधूलिमहितपुरग्रामाकरव्रजः ॥११६॥

मथुरानगरीलोकलोचनानन्दचन्द्रमाः ।
गोपीपूर्वपरानन्दस्मारकस्मेरसन्मुखः ॥११७॥

विपरीतवेशविस्मित-व्रजवनितान्योन्यकथाहसितः ।
गोमुखसमुदितहाम्बारवस्थिरलोचनावलितः ॥११८॥

हृदयप्रमोदनिर्भरविस्मितगोपाललोचनापीतः ।
आलोकनजडलोचनगोकुलनगरीजनानन्दः ॥११९॥

मथुरामल्लदुष्प्रेक्ष्यहृष्टोरःस्कन्धसद्भुजः ।
आत्मसंगोपनव्यग्रः स्वप्रकाशमहोदयः ॥१२०॥

गोकुलप्रेक्षणोत्साही गोकुलानन्दवर्धनः ।
स्वसंकेतस्थल–क्षेम–प्रेक्षणप्रेमविह्वलः ॥१२१॥

श्रमोपशमनप्रेयः पूर्वनीपतलाश्रयः ।
नौकाविनोदसंस्मारियमुनादर्शनोत्सुकः ॥१२२॥

लुप्तपदांकव्याकुलयमुनातटपादचिह्नधनदानः ।
रासमण्डलविनोदकौतुकी प्रेमाश्रुलहरीलसद्वपुः ॥१२३॥

व्यक्तरासरसासक्तगोपीभावाकुलध्वनिः ।
गोपीभावालसतनुर्भावप्रस्मरणाकुलः ॥१२४॥

गुप्तपद्धतिसंन्यास-प्रकाशगुरुदीपकः ।
अन्तर्विलोलितहरिप्रेमसारसुखाम्बुधिः ॥१२५॥

भावसंवरणात्यन्तविस्फारिप्रेमविह्वलः ।
सोढानेकाबलाभावशस्त्रः सर्वं सहासमः ॥१२६॥

अलब्धरासगोपस्त्रीदुःखकारुण्यरोदनः ।
गोपीहृदयसंभूतदुःखदावाग्निहारकः ॥१२७॥

कृपाद्दृक्पातलहरीसुधाधारानिपानभूः ।
कान्तागारेक्षणसुधीः कृतगोवर्धनाश्रयः ॥१२८॥

इन्द्राकोपाश्रुधारौघवृष्टिप्लावितगोत्रभः ।
समसानुस्थलावासकृतेक्षणमुदार्द्रधीः ।
यमुनाकूलावसथो द्वादशोपवनाश्रयः ॥१२९॥

निजजननयनमनःसुखदायकपूर्वावतारसुखभूमिः ।
लीलाविहारकारी हसितनिजलोकनिजहासः ॥१३०॥

स्वविभूतिविहारलम्पटः स्मरसञ्चारकभंगुराक्षिपातः ।
मदमन्दगतिः स्मिताननो रससंघूर्णितलोचनो नृधर्मा ॥१३१॥

प्रख्यातनागराचार्यः सौन्दर्यानन्ददेहधृक् ।
प्रेमभावोदितवपुः प्रकटानन्दविग्रहः ॥१३२॥

मथुराजन-सद्भावप्रीतो मधुरभाषणः ।
उपायनकरासंख्यजनविस्मयकारकः ॥१३३॥

नानागुणमयद्रव्यभोजनैक-प्रलोभनः ।
निजलोक-क्षेम-परकथामधुरभाषणः ।
कथाहास्यातिमधुरदीर्घकालकृतासनः ॥१३४॥

नित्यानन्दप्रियभ्राता नित्यानन्दबलप्रदः ।
नित्यानन्दप्रभावज्ञो नित्यानन्दैकजीवनः ॥१३५॥

वक्रेश्वरदयोन्मादी प्रेमसर्वस्वदायकः ।
काशीश्वरप्रश्रयदो रामानन्दकथाप्रियः ॥१३६॥

आचार्य-श्रीमदद्वैतदेहशक्तिबलप्रदः ।
अद्वैतभावसम्पूर्णः श्रीमदद्वैतपालकः ॥१३७॥

मुकुन्ददत्तातुलभक्तिभाव-दयाप्रदत्ताखिलगीतिकासुधः ।
अशेषसंसेव्यपदारविन्दो गदाधरोपास्यपदाम्बुजासवः ॥१३८॥

सूक्तापूतमुखाम्भोज-कविचन्द्रार्चदः प्रभुः ।
सुखानन्दपुरीत्राता भवानन्दप्रसादकृत् ॥१३९॥

निसर्गशीतलालाप-निजलोकसुखार्णवः ।
सत्यराजान्वयत्राता गृहीत-शिशुनन्दनः ॥१४०॥

रामानन्दाद्यतिप्रीतो गङ्गादासद्विजप्रियः ।
वेदतत्त्वार्थनिर्णीत-मानुषातीतविग्रहः ॥१४१॥

अनन्यसाधारणभक्तिभाव-गृहीतदत्तान्वयवासुदेवः ।
सर्वावतारप्रथितोरुदास्यमुरारिगुप्तप्रणयैकदाता ॥१४२॥

प्रेमभक्तिरसव्यग्रदासवंशगदाधरः ।
निजकारुण्यविभव-कृष्णदासकृपाकरः ॥१४३॥

नानादेशोद्गीयमानस्वगाथामृतयज्ञभुक् ।
धातुद्वयोपभोगार्हद्रव्यभोजनपुष्टिभाक् ॥१४४॥

हरिदासप्रणयदः श्रीमद्विष्णुपुरीश्वरः ।
भारतीकेशवत्राता सत्यसन्धः सनातनः ॥१४५॥

नानादिग्देशसञ्चारी वानप्रस्थमुनिप्रियः ।
उपवीतधरो ब्रह्मचारी मातृवशो गृही ॥१४६॥

संन्यासी लोकशिक्षावान् लोकाभिप्रायपूरकः ।
सार्वभौमदयासम्पद्दर्शिताद्भुतषड्भुजः ॥१४७॥

वर्णेष्वहं द्विज इति वेदरीत्या द्विजाश्रयः ।
भक्तिशिक्षाकल्पतरुः संन्यासाश्रमपावनः ॥१४८॥

संन्यासवेशविस्फूर्जल्लावण्याम्बुधिनायकः ।
द्विजभक्तो द्विजप्रियो द्विजनाथोऽतिथिप्रियः ॥१४९॥

कीर्तनैर्विश्वभरणात् श्रीविश्वम्भरनामधृक् ।
सतीशचीप्रेमदाता पाता कलियुगे नृणाम् ॥१५०॥

सर्वावतारसुखदः स्वचरित्रकथाघृणः ।
निजप्रेमप्रदानोत्थ–भक्तप्रेमरसावशः ॥१५१॥

धन्याधीनकृपादत्तो लोकनिस्तारभारधृक् ।
अमानीमानदः कृष्णदासवैद्यप्रियेश्वरः ॥१५२॥

रघुनाथभिषग्ज्ञातो देवानन्दद्विजप्रियः ।
रामभद्रपतिर्वीरभद्रत्राता कृपाम्बुधिः ॥१५३॥

वल्लभसेनसदीशः श्रीमद्रघुनाथनायकः सुमनाः ।
श्रीचन्द्रशेखरपतिर्वैद्यश्रीविष्णुदासेश्वरः ॥१५४॥

विद्यानिधिप्रियः श्रीमत्कलानिधिगुणप्रियः ।
जानकीनाथविप्रेशो द्विजश्रीधरबान्धवः ॥१५५॥

गोपालेशो यादवेशो रामलक्ष्मणसुप्रियः ।
चन्दनेश्वरसुप्रीतो जगन्नाथगणप्रियः ॥१५६॥

ओड्रप्रियशिखिभर्ता केशवबन्धुर्मुरारिदासेशः ।
परमानन्दसदीशः सेनजगन्नाथबान्धवो बन्धुः ॥१५७॥

धन्यश्रीजयदेवभाग्यविलसत्तद्गीतनृत्योदयः
श्रीविद्यापति-भावबोधविकसद्गोपीसुखोद्दीपनः ।
चण्डीदाससुखप्रसादकुतुकी संगीतगीतार्णवः
श्रीमद्भागवतार्थबोधविजयी वैदग्ध्यचूडामणिः ॥१५८॥

यतिवेशक्षमासारश्चतुर्थाश्रमपावनः ।
नवद्वीपावनीचन्द्रः सर्वसम्पद्सुधांबुधिः ॥१५९॥

दामोदरस्वरलेशः सनातनदयालवः ।
वाणीनाथमिश्रस्वामी दासगोविन्दवत्सलः ॥१६०॥

श्रीरामदास-कविचन्द्रसुगानतुष्टः
स्वाधीनः ईश्वरपुरी-प्रणयप्रसादः ।
कंसारिभूरिकरुणो नरसिंहतीर्थ-
गोप्ता कृपार्द्रनयनेक्षितशङ्कराख्यः ॥१६१॥

जगद्विख्यात-सत्कीर्तिरवधूतप्रियानुजः ।
गभीरनाभिकमलो राजत्तनुरुहावलिः ॥१६२॥

नामसूत्रधरः सत्यः कृष्णनामपरायणः ।
अतर्क्यमहिमा पुष्पोद्यानगूढाश्रमः सुधीः ॥१६३॥

निजलोकप्रेमदाता दर्शनक्षीणपातकः ।
भक्ताभिप्रायवशगः प्रेमभावलसद्वपुः ।
वेदगर्भनिगूढात्मा गोविन्देच्छाविनोदकः ॥१६४॥

प्रेमोद्गारस्वनाहूतचन्द्रसूर्यसुराधिपः ।
महानन्दप्रियः सर्वदोषहा गुणसागरः ॥१६५॥

नीतिप्रवर्तनाचार्यो मायिनामपि मायिकः ।
सर्वलोकैकरसदः कलिदोषसहस्रहा ॥१६६॥

वेदवक्ताऽनहंवादी निजभक्तात्मशोधकः ।
अनेकपातकव्यग्रनामममृग्यमहोदयः ॥१६७॥

कौस्तुभोद्भासितश्रीमद्वक्षा हेमांगुलीयकः ।
गौरज्योतिः कृष्णवर्णो द्विजवंशसुधानिधिः ॥१६८॥

कविराजमिश्रभर्ता कर्ता संसारचक्रस्य ।
हन्ता दुष्टजनानां च संसारसागरोद्धर्ता ॥१६९॥

सर्वज्ञः सर्वदर्शी च सर्वसाक्षी महाप्रभुः ।
भक्तित्राता भक्तिदाता भक्तिदानजगद्गुरुः ॥१७०॥

लोकबन्धुर्लोकनाथो भक्तपक्षकृपामयः ।
गृहीतैश्वर्यमाधुर्य-परमानन्दमण्डितः ॥१७१॥

दासवंशजगन्नाथनागरो रससागरः ।
अशेषनागरीनाथः स्वयंशक्तिश्च शक्तिमान् ॥१७२॥

जगत्पिता जगद्बन्धुः जगत्स्वामी जगद्धनम् ।
वैकुण्ठनाथः श्रीनाथः क्षीराब्धिशयनप्रियः ॥१७३॥

अनन्तशायी भूमीन्द्र-कवीन्द्र-कार्यकौतुकी ।
मुनिधर्मा मुनीन्द्रश्च नारदादिमुनीश्वरः ॥१७४॥

ब्रह्मपादो मुक्तिपादस्तीर्थपादः सरित्पादः ।
अकिञ्चनः शुद्धसत्त्वः संख्यातीतगुणाश्रयः ॥१७५॥

वेदमृग्यः शास्त्रमृग्यो योगीमृग्योऽतिदुर्लभः ।
मुनिमृग्यः सत्यमृग्यो दयामृग्यः शुभोदयः ॥१७६॥

ज्ञानमृग्यो ध्यानमृग्यः स्वाध्यायव्रतमार्गितः ।
दुर्वासनातमोहन्ता प्रेमधारामहासिधृक् ॥१७७॥

धर्मशास्त्रार्थनिर्णेता तत्तद्देशैकनायकः ।
नीलाचलतलावासो वनमालाविभूषणः ॥१७८॥

व्युदस्तमायः सर्वज्ञः साधुनेत्रमहोत्सवः ।
दयाश्रुतरसाविष्टो गोविन्दानन्दसंस्तवः ॥१७९॥

प्रेमभक्तिवलितः सुखभोक्ता वेदसारनिजकीर्तनवक्ता ।
प्रेमदृष्टिमयकौतुकरासः शैशवावधिसुलालितवासः ॥१८०॥

कृष्णक्रीडः कृष्णलीलः कृष्णमानी कृपाजडः ।
शान्तोऽपि नागरः शुद्धः ईषत्कपिललोचनः ॥१८१॥

वेदान्तमृग्यः संकल्पबाह्यः स्वेच्छाप्रकाशकः ।
कृपालुर्भक्तसुलभः स्वगुणाख्यानरूपधृक् ॥१८२॥

मूर्तिमत्केलिसम्पत्तिमुक्तानन्दरसोत्सवः ।
कृपाप्रत्यक्षशृङ्गाररसदो रसिकाग्रणीः ॥१८३॥

भूतिदाता भूतिहन्ता भवदो भवनाशकः ।
अच्युतानन्द-सद्भक्तिदत्तस्वपदपङ्कजः ॥१८४॥

ब्रह्मानन्दपुरीश्वर ओड्रवासी-कृष्णदासेशः ।
श्रीपुरुषोत्तमभर्ता ओड्रशिवानन्दबान्धवोद्धर्ता ॥१८५॥

कृष्णानन्दपुरीश्वरः कल्पितनागकेशराकल्पः ।
श्रीवासुदेवभर्ता गायनगोविन्ददाससंत्राता ॥१८६॥

द्विजहरिदासकृपालुस्तीर्थजगन्नाथपावनो वीरः ।
त्यक्तमृगाजिनवासः श्रीमद्ब्रह्मानन्दभारतोशः ॥१८७॥

मुकुन्दकविचन्द्रेशः सच्चिदानन्दबान्धव ।
गोपालदाससंत्राता गोपालाचार्यसत्पतिः ॥१८८॥

कमलाकान्तविश्वासशिक्षादानस्फुरन्मनाः ।
सर्वसंकल्पदाता च सत्यसंकल्पनामधृक् ॥१८९॥

सत्यसारः सत्यतनुः सत्यवाक् सत्यभक्तिदः ।
सर्वंसहः सुनियमः स्वयंकामः स्वयंमधुः ॥१९०॥

भवव्याधिहरः साक्षाज्ज्ञानशुद्ध-चिकित्सकः ।
कृतत्रिरात्रविश्राम-दासमाधवलालनः ॥१९१॥

गृहीतपूजा-सत्कारविख्यातमधुसूदनः ।
अशेषमाधुरीहृद्य-गद्यपद्यविशारदः ॥१९२॥

अध्यात्मविद्या-दुर्बोधो यमदुर्गमपद्धतिः ।
शमदुर्दर्शपादाब्जः शान्ताशान्तमनोरथः ॥१९३॥

धर्मकर्मपथातीत आत्मज्ञान-विनिस्पृहः ।
पादसेवारसाधीन-गुणकीर्तनलालसः ॥१९४॥

स्नेहसद्भक्तिसुलभस्तरुणारुणसत्पदः ।
आत्मविद्यापराजस्रनिजसेवनबोधकः ॥१९५॥

शुद्धसत्त्वभक्तिदाता भक्तिभुग् भक्तिपालकः ।
भक्तिसेवातिसुलभः कोटिजन्माघनाशनः ॥१९६॥

नामकोटिधनक्रीतो ममेति व्रततोषितः ।
निजनामरवाहूतो निजदासगृहाश्रयः ॥१९७॥

शुद्धवेशः सर्ववर्णप्रियो भक्तान्नभोजकः ।
भक्तचित्तानुशायी च भक्तपालनतत्परः ॥१९८॥

भक्तचित्तैकवसतिर्भक्तमङ्गलवर्धनः ।
संबोधनपदाधीनः सर्वशास्त्रार्थगोपकः ॥१९९॥

गीताभागवतव्याख्या–भक्तिमात्रप्रकाशकः ।
असंख्ययोगविश्रान्तभक्तियोगप्रकाशकृत् ॥२००॥

अध्यात्मज्ञानसन्तप्त–कीर्तनामृतशान्तिदः ।
प्रधानभक्तिबोधार्थप्रेमभक्तिप्रकाशकः ॥२०१॥

निजभक्तिसुखास्वाद–विज्ञानो निजभक्तिमान् ।
श्रीकृष्णः कृष्णचैतन्यः स्वर्णाचललसद्वपुः ॥२०२॥

युगानुरूपवेदोक्त–गौरदेहप्रकाशकः ।
रघुनन्दनमाधुर्य–प्रेमधैर्यसुखावहः ॥२०३॥

गुरुभक्तो गभीरात्मा सुशीलो मातृवत्सलः ।
दयालुदुर्गतत्राणो वशी त्यागी कविः सुधीः ॥२०४॥

द्विजदामोदरप्राणनाथो नारायणेश्वरः ।
आत्मप्रकाशावेशोत्थ–कालोऽहमितिवाङ्मयः ॥२०५॥

सिंहग्रीवातिमधुरः संन्यासावेशवीक्षणः ।
नरसिंहावेशमाद्यत्करालमधुरोद्यमः ॥२०६॥

निजलोकदयागभीरधीः परमानन्दपुरी-परायणः ।
निजकिंकरशंकरद्विज-प्रणयस्नेहदयामयः प्रभुः ॥२०७॥

काशीमिश्राश्रमप्रीतः काशीमिश्रात्मशक्तिदः ।
नीलाचलपतिप्राणो नीलाचलपतिः स्वयम् ॥२०८॥

जगन्नाथान्नसंभोग–संसूचिततदादरः ।
प्रतापरुद्रसंत्राता गौडसत्कीर्तिदुन्दुभिः ॥२०९॥

शिवानन्दप्रणयदः प्रेमसद्भक्तिलम्पटः ।
मुकुन्ददाससुप्रीतो लोकत्राता महाबलः ॥२१०॥

समुद्रकूलसञ्चारी जनसञ्चारभीतवत् ।
अशेषजगतीज्ञातो निजगोपनतत्परः ॥२११॥

सत्यानन्दो जितक्रोधः कोटिब्रह्माण्डनायकः ।
अन्तर्यामी कृती दान्तो लोकप्रीणनपण्डितः ॥२१२॥

ओड्रदेशजनानन्दः सर्वसुन्दरसुन्दरः ।
निजप्रेमभरोन्माद-विस्मृतात्मा जगन्मयः ॥२१३॥

अशेषगुणसम्पन्नः शूरसिंहपराक्रमः ।
लघुभोजी शीघ्रभोजी लघुगामी सतां गतिः ॥२१४॥

पद्मरागसुधासार-सुखसारतनुप्रभः ।
शैशवोचितमाधुर्यभक्तप्रणयवर्धनः ॥२१५॥

जगाइ-प्रेमदाता च माधाइ-त्राणतत्परः ।
सर्ववर्णाश्रमप्रीतो वाचोयुक्तिविशारदः ॥२१६॥

जयदेवप्रीतिदाता प्रीतिदः करुणानिधिः ।
संसारगरलाम्भोधौ पीयूषाम्बुधिसृन्यशः ॥२१७॥

स्वभक्तदोषगोप्ता च भक्ताभक्तेषु भक्तिमान् ।
पद्मधृक् शंखभृच्चक्री गदावान् हेमवेणुवान् ॥२१८॥

धनुर्धरो मल्लभुजो मुक्ताहारविभूषणः ।
पुरन्दराचार्यस्नेहदत्तस्वपदपंकजः ॥२१९॥

शास्त्रमूर्तिर्महातेजा दयाप्राकृतचेष्टितः ।
माधवाचार्यसंत्राता. सिंहेश्वरदयापरः ॥२२०॥

कृपानयनपातार्ह–द्विजश्रीरघुनन्दनः ।
सेनवंशशिवानन्दप्रियः संसारमङ्गलः ॥२२१॥

गोपीनाथप्रतिष्ठाता गोपीनाथशुभप्रदः ।
गोपीभक्तिग्राहयिता त्वालवन्दारपाठकः ॥२२२॥

पूर्वावतार–स्वयशःकथानिक्षिप्तकालिमा ।
तपनाचार्यसुखदश्चिरञ्जीवदयापरः ॥२२३॥

दामोदरप्रेमदाता सदाचारविभूषणः ।
गौरीनाथप्रियः शान्तः कृपात्तयदुनन्दनः ॥२२४॥

रासनिर्वाहसंक्षोभ–प्रकाशीकृतषड्भगः ।
सुगीतो नर्तकगुरुः सर्वसंगीतसारवित् ॥२२५॥

मनोहारी चमत्कारी रूपो मन्मथमन्मथः ।
दीनानुरक्तः सर्वेशो दाता मेघगभीरवाक् ॥२२६॥

काव्यशास्त्रविनोदी च नाट्यालंकारपण्डितः ।
पुराणसत्कथाश्रोता गीतापाठपरायणः ॥२२७॥

ज्ञानदाता ज्ञानसारो ज्ञानीन्द्रो योगदुर्लभः ।
योगीन्द्रो यज्ञपादश्च कोटिब्रह्माण्डविश्रुतः ॥२२८॥

निर्वाणतत्परानस्य विभूति–ब्रह्मदायकः ।
हरिदासद्विजत्राता शिशुगोपालकौतुकी ॥२२९॥

आपच्छत–समुद्धर्ता भवशोक–सहस्रहा ।
तीर्थकोटिसमाख्यानो जगन्नाथविनोदकृत् ॥२३०॥

जगन्नाथजनप्रीतो जगन्नाथप्रसाददः ।
जगन्नाथपरो विष्णुर्महापतितपावनः ॥२३१॥

जितकामो जितक्रोधो ब्रह्माण्डप्रेमभाण्डकृत् ।
प्रेमदण्डः प्रेमदानो द्विभुजोऽथ चतुर्भुजः ॥२३२॥

भक्तरक्षाविधानार्थ-द्दप्तबाहुसहस्रभृत् ।
सीतास्नेहपरो रामस्त्रेता-भाग्यवती-प्रियः ॥२३३॥

रामानन्दस्नेहपरः कमलाकान्तवत्सलः ।
प्रेमामृतघटव्याज-सूत्रनद्धकरंगभृत् ॥२३४॥

सनातनप्रियस्वामी रूपप्रेमरतिप्रदः ।
अनुपमप्रियः कृष्णदासत्राता रघुप्रियः ॥२३५॥

गरुडावधूतशुद्धप्रकार-भजनाविरतिसुखदाता ।
रघुनाथमिश्रसेवावश्यो भक्तानतावत्राता ॥२३६॥

गोपालपण्डितानन्दो रामदासप्रियः शुचिः ।
नाशिताशेषदुर्बोधप्रेमधारासुदर्शनः ॥२३७॥

कलौ तु स्वर्णवर्णाभः सत्ये पाण्डुरविग्रहः ।
द्वापरेऽञ्जनपुञ्जाभस्त्रेतायामरुणद्युतिः ॥२३८॥

दशाननशिरश्छेत्ता दंष्ट्रोद्धृतवसुन्धरः ।
द्दप्तक्षत्रबलोच्छेत्ता वेदोद्धारपरायणः ॥२३९॥

यमुनाकर्षणबली लीलाधृतधराधरः ।
कलिदैत्यच्छलकरः प्रह्लादप्रीतिसादरः ॥२४०॥

म्लेच्छदण्डकरक्रीडो हिंसायज्ञविनिन्दकः ।
पट्टगोपीनाथवसुच्छेदकाराहरस्मृतिः ॥२४१॥

श्रीनाथमिश्रकरुणो नानाकायधरः परः ।
षण्मासग्राहितस्वाख्यरामानन्दस्वपादद: ॥२४२॥

धन्योपास्यपदाम्भोजो धन्यलब्धकृपालवः ।
स्वेच्छाप्रवर्तिताशेषनिजभक्तमनोरथः ।
बन्धुप्रियो देवबन्धुर्लोकातीतवरप्रदः ॥२४३॥

प्रेमसम्पत्ति–विदलित–निजलोकभूरिभयशोकः ।
गंगाभक्तिवशोद्धृत–धन्यनवद्वीपवृद्धशिशुदारः ॥२४४॥

लोकातीतो रसस्रष्टा लोकातीतसुदुःखहा ।
लोकातीतरसस्वामी भावसंस्निग्धभक्तिदः ॥२४५॥

सर्वलोकसुखस्तम्भः सर्वधर्मसुखोदयः ।
सर्वाश्रमप्रार्थ्यफलश्चतुर्वर्गफलप्रदः ॥२४६॥

तीर्थीकृताशेषतीर्थः स्वजनानन्दवर्धनः ।
तीर्थगामी तीर्थभक्तो निजनाम्नाघकम्पनः ॥२४७॥

श्रीरङ्गनाथदर्शी हर्षाकलितत्रिमल्लनाथश्रीः ।
श्रद्धापराधवीक्षित-निरवधिलोकप्रसादधनदाता ॥२४८॥

प्रद्युम्नानुग्रहकरः शुभानन्दरसप्रदः ।
महेशपण्डितस्वामी श्रीमदीशानपालकः ॥२४९॥

स्निग्धमाधुर्यकरुणः कृष्णदासान्नभोजकः ।
कल्याणीदत्तकल्याणः शिवपूजापरायणः ॥२५०॥

कीर्तनानन्दवैदग्ध्यदाता नादहृतस्मृतिः ।
तुलसीसेवनपरस्तुलसीमूलमोचकः ॥२५१॥

तुलसीपूजनपरस्तुलसीप्रणतप्रियः ।
संन्यासी मानदः सर्वपूजकः सर्वपूजितः ॥२५२॥

मिश्रश्रीनिधिसुखदः श्रीयुक्तभगवान् मिश्रसंत्राता ।
श्रीवासप्रियदयितो गोपीकान्तप्रियो धीमान् ॥२५३॥

सद्वैद्यश्रीहृदयानन्द–कलाद्दकूपातकारी ।
कमलनयनसुखदाता कमलाकान्तप्रियप्राणः ॥२५४॥

गोपीनाथविनोदो निजमातृविलास-सुखवसतिः ।
हरिदासकीर्तनसुखी अद्वैताचार्यमानन–प्रणयी ।
अम्बागौरवपूजनचतुरो गुरुमानपूजितःश्रीमान् ॥२५५॥

अद्वैतपूजको धीमान् सर्वमानसरञ्जकः ।
सुबुद्धिमिश्रसुप्रीतो मधुसूदनवत्सलः ॥२५६॥

सप्तधैकत्रसम्भूत–तमालतरुमोक्षकृत् ।
मुरारिगुप्तवसिता भक्तभोजनकौतुकी ॥२५७॥

गदाधरप्रेमभास्वद्–राधारभसमोदकृत् ।
अनेकद्विज–दिव्यान्नपानभोजनतत्परः ॥२५८॥

प्रेमावासः प्रेमतत्त्वं प्रेमविस्तारकारणः ।
प्रेमवारिधिपूर्णेन्दुः प्रेमनामपरायणः ॥२५९॥

प्रेमानुरागभूः स्नेहसेव्यमानपदाम्बुजः ।
प्रेमप्रीतिपरानन्दसन्दोहस्तत्त्वभूर्विभुः ॥२६०॥

अष्टभक्तिप्रसूर्धीरो नवभक्तिविनोदकृत् ।
एकभक्तितनुर्धन्यः एकभक्तिविहारकृत् ॥२६१॥

लीलातनुः केलितनुर्भक्तिभावकलातनुः ।
श्रीमत्तीर्थतनुर्धर्मतनुः कर्मतनुर्महान् ॥२६२॥

सर्वसम्पत्तनुः सर्वरससारतनुः प्रभुः ।
नामतनू रूपतनुः संगीततनुरच्युतः ॥२६३॥

शान्ततनुर्वेदतनुः स्वभक्तेच्छातनुः प्रियः ।
भगवान् भक्तिसन्दानो भगवद्भक्तिरूपधृक् ॥२६४॥

श्रीमन्नरहरिप्राणः श्रीमन्नरहरिप्रियः ।
सर्वावतारकरुणा-परिपाकदयापरः ॥२६५॥

दुर्गतम्लेच्छचण्डाल-पतिताधमतारकः ।
द्विजवंशाम्बुजश्रेणी-प्रकाशैकदिवाकरः ॥२६६॥

इति श्रीनरहरिसरकारठक्कुर-विरचितं

श्रीकृष्णचैतन्यचन्द्रस्य सहस्रनामस्तोत्रं (२) सम्पूर्णम् ।

# श्रीकृष्णचैतन्यचन्द्रस्य सहस्रनामस्तोत्रम् (३) ।

कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ १ ॥

तं नत्वा कृष्णचैतन्यं साङ्गोपाङ्गं जगद्गुरुम् ।
दिव्यनाम्नां सहस्रेण संस्तौमि परमेश्वरम् ॥ २ ॥

ऐश्वर्यनामानि ।

षडैश्वर्यो ब्रह्मकान्तिः पुरुषांशी स्वयंहरिः ।
सच्चिदानन्दशक्तिश्च सच्चिदानन्दविग्रहः ॥ ३ ॥

सर्वगः सर्वविद्योगी महाज्ञानी महाविभुः ।
सर्वोत्तमः सर्वगतः सर्वभूतगुहाशयः ॥ ४ ॥

सर्वात्मा सर्वसाक्षी च सर्वदेवनमस्कृतः ।
संसाराश्वत्थबीजश्चाश्वत्थमूलनिकृन्तकः ॥ ५ ॥

पुराणपुरुषोऽव्यक्तः सदाख्यः सदसत्परः ।
शुद्धः प्रणववाच्यश्च क्षराक्षरपरो वरः ॥ ६ ॥

अक्षरो निर्विकारश्च निरीहो निरुपाधिकः ।
निरञ्जनो नित्यनित्यः सर्वकल्याणविग्रहः ॥ ७ ॥

भगवान् भगहा भर्गो भवत्राताऽखिलेश्वरः ।
शिवः शिवप्रदो विष्णुः प्रभविष्णुरनामयः ॥ ८ ॥

मुकुन्दो मुक्तिबीजञ्च मुक्तो मुक्तिपतिर्हरिः ।
सहस्राख्यः सहस्राक्षो बहुपाणिः सहस्रपात् ॥ ९ ॥

सहस्रशीर्षा साहस्रजन्मधृक् सर्वतोमुखः ।
त्र्यय्यात्मा त्र्यय्यन्तवेद्यस्त्रिदशादिस्त्रिखेश्वरः ॥१०॥

जितारिश्च जितक्रोधः शत्रुहा शत्रुतापनः ।
वैकुण्ठनाथो लोकेशो भक्ताभिमतरूपधृक् ॥११॥

नारायणो नरसखः शास्ता भुवनपालनः ।
निराश्रयो निराधारः सर्वाधारो जगत्पतिः ॥१२॥

कूटस्थोऽकूटदर्शी च मायेशो मायिनांवरः ।
वरेण्यो वरदो वर्यो वरिष्ठो भयनाशनः ॥१३॥

सर्वनामा सर्वरूपो नामरूपादिकारणम् ।
हिरण्यकेशो रुक्माङ्गो रुक्ममाली हिरण्मयः ॥१४॥

उत्त्रिपादेकपादेकरूपश्च बहुरूपकः ।
अशरीरः शरीरी च अग्राह्यः शाश्वतः स्वयम् ॥१५॥

वैभवः प्राभवोंशी च विलासी स्वप्रकाशकः ।
प्रकाशी च तदेकात्मरूपी स्वांश्यपराजितः ॥१६॥

ज्ञानासाध्यो भक्तिसाध्यो योगासाध्यो नराकृतिः ।
भिन्नोऽभिन्नश्च सन्मात्रं मधुरो मधुराश्रयः ॥१७॥

त्रिमूर्तिश्च चतुर्मूर्तिश्चतुर्वर्णश्चतुर्गतिः ।
अकारणः कारणञ्च सर्वकारणकारणम् ॥१८॥

अद्वैतोऽद्वैतरूपश्च सृष्टिस्थितिलयेश्वरः ।
चिद्विभूतिर्महायोगी भक्ताराध्यः पराश्रयः ॥१९॥

सर्वाराध्यः पराराध्योऽनाराध्यो विश्वभावनः ।
परव्योमोर्ध्वनिलयः कृपालुर्गुरुविग्रहः ॥२०॥

स्रष्टा पाता च संहर्ताऽनन्तश्रीः पुरुषोत्तमः ।
अत्याश्चर्यः पुण्यलीलो निर्गुणः सगुणः स्वराट् ॥२१॥

चतुर्विंशतिमूर्तिश्च दशमूर्तिरनन्तकः ।
अकालः कालकालश्च छन्नोऽच्छन्नो विभूतिपः ॥२२॥

अनादिरादिः क्षेत्रज्ञो ह्यमायी मायिनां प्रियः ।
श्रोतव्यः परमात्मांशी त्र्यन्तर्यामी महाप्रभुः ॥२३॥

ब्रह्माभो ब्रह्मकिरणो ब्रह्मयोनिस्तदाश्रयः ।
चतुश्चतुःकलापादः सर्वास्पदपदो गतिः ॥२४॥

सर्वावतारी सर्वश्रीः सर्वदिव्यविभूतिधृक् ।
गुणसंगी गुणातीतो गम्योऽगम्यो महामनाः ॥२५॥

इत्यैश्वर्यनामानि ।

आदिलीलानामानि ।

बाललीलाधरवरो द्वैध्यकमूर्तिर्गुणाश्रयः ।
शचीगर्भोदधिशयः स्वयमाविःकलेवरः ॥२६॥

व्रजेन्द्रनन्दनः श्रीमान् राधिकाप्राणवल्लभः ।
द्वापरोडुपतिः कृष्णो माधुर्यरसनायकः ॥२७॥

अन्तःकृष्णो बहिर्गौरः कलित्राता शुभाश्रयः ।
अद्वैतामंत्रितोऽद्वैतानीतोऽद्वैतप्रियप्रभुः ॥२८॥

जगन्नाथात्मजो ब्रह्मसुतो ब्रह्मकुलांबुजः ।
शचीसूनुः शचीनन्दिः शचीगर्भोदजः परः ॥२९॥

नवद्वीपोदयः पूर्णोदयश्चन्द्रग्रहोदयः ।
प्राग्वसंतोदयः फाल्गुन्युदयो मंगलोदयः ॥३०॥

नामसंकीर्तनप्रीतिर्नामसंकीर्तनोदयः ।
गौडचन्द्रो गौडनाथो गौरो गोद्रुमचन्द्रमाः ॥३१॥

चैतन्यः कृष्णचैतन्यः स्वयंकृष्णो रसात्मकः ।
त्रिसुखास्वादको राधाभावो राधाद्युतिग्रहः ॥३२॥

साङ्गोपाङ्गावतीर्णश्च त्रिस्रोतस्तीरसंभवः ।
कलिसन्ध्यावतारश्च त्रियुगश्छिदिवेश्वरः ॥३३॥

विश्वरूपानुजः शान्तः शुभर्क्षग्रहतारकः ।
शुभाङ्कितपदांभोजः शुभाङ्कितकराम्बुजः ॥३४॥

द्वात्रिंशल्लक्षणोपेतो महापुरुषलक्षणः ।
आजानुलम्बितभुजोऽन्तर्भुजः शुभविग्रहः ॥३५॥

विश्वंभरः सुदिव्यश्रीर्नामक्रन्दनसंवरः ।
त्यक्तमृतस्तन्यपायी च मातृपितृसुखप्रदः ॥३६॥

अतिथ्यन्नत्रिभोजी च अतिथित्राणकारकः ।
कन्यानैवेद्यभोक्ता च कन्याभीष्टवरप्रदः ॥३७॥

चपलश्च छलग्राही चापल्यसुखदायकः ।
लक्ष्मीसन्दर्शनाह्लादो लक्ष्मीस्रक्चन्दनार्चितः॥३८॥

मातृज्ञानप्रदाता च मात्राज्ञाप्रतिपालकः ।
दिव्यलोकागमगृहः शून्यपान्नूपुरध्वनिः ॥३९॥

आश्चर्यबाल्यलीलश्च अद्भुतप्रियदर्शनः ।
बालकानन्ददाता च बालकप्राणवल्लभः ॥४०॥

पितृवाक्यानुवर्ती च मातृवाक्यानुवर्त्यपि ।
सर्वानन्दननृत्यश्च कृष्णलीलाऽनुकारकः ॥४१॥

कृष्णवद्बाल्यलीलश्च गृहभाण्डादिभेदकः ।
विद्याभ्यासरतोऽध्येता पाठदक्षः सुपाठकः ॥४२॥

अन्तेवास्यग्रणीर्गङ्गादासशिष्यः कविः सुधीः ।
पितृसन्तोषकः पितृभक्तश्चैव महायशाः ॥४३॥

पितृयज्ञविधेयात्मा धार्मिकः पितृयज्ञकृत् ।
पुण्यवान् पुण्यकीर्तिश्च पुण्यश्लोकः सुपुण्यदः ॥४४॥

उद्वाहासक्तचित्तश्च गार्हस्थ्यधर्मवासनः ।
श्रीपतिर्माधवो लक्ष्मीपतिः श्रीरुक्मिणीपतिः ॥४५॥

श्रीधरः श्रीनिवासश्च श्रीनाथो जानकीपतिः ।
किशोरो रसराजश्च मदनोज्ज्वलविग्रहः ॥४६॥

मनोहराङ्गप्रत्यंगस्तप्तकांचनविग्रहः ।
कोटिसूर्यप्रभः कोटिमृगाङ्कस्निग्धशीतलः ॥४७॥

कोटिकन्दर्पलावण्यः कोटिगीष्पतिभाषणः ।
विद्वत्प्रियो वावदूकः सत्यवादी जितेन्द्रियः ॥४८॥

विपश्चिच्छाब्दिको विद्वान् सर्वशास्त्रविशारदः ।
अध्यापको महामान्यो बहुशिष्यसमन्वितः ॥४९॥

सद्व्याख्याकारको वादी वादिजिद् विनयी बुधः ।
जलकेलिरतः कृष्णजलकेल्यनुकारकः ॥५०॥

तपनद्वैधसंच्छेत्ता साध्यसाधनबोधदः ।
वङ्गाटनो वङ्गहितः वङ्गे नामप्रचारकः ॥५१॥

वङ्गोद्धर्ता वङ्गगुरुर्वङ्गामङ्गलनाशनः ।
गौडानन्दो गौडबन्धुर्गौडवासिजनप्रियः ॥५२॥

विष्णुप्रियापती राधापतिर्दिग्विजयीस्ततः ।
जितसन्मानदो दिग्विजयीबन्धनखण्डनः ॥५३॥

युवा यौवनकर्मा च दिव्यस्रक्चन्दनोज्ज्वलः ।
दिव्यवासो दिव्यमूर्तिर्दिव्यसद्रत्नभूषणः ॥५४॥

कोटिकन्दर्पसौन्दर्यः कोटिचन्द्रनिभाननः ।
कोटिवाग्देवतावाणिः कोटिदेवेज्यबुद्धिमान् ॥५५॥

पण्डिताध्यापको मानी यत्तो यौवनवेशधृक् ।
नारीगणमनश्चन्द्रो भावानिलरुजाधरः ॥५६॥

प्रेमदः प्रेममत्तश्च गयागः पितृकर्मकृत् ।
ईश्वरप्रियशिष्यश्च दीक्षितः प्रेमविह्वलः ॥५७॥

जननीप्रेमदाता च जननीप्रेमवर्धनः ।
अद्वैताचार्यमिलितोऽद्वैतविश्वात्मदर्शकः ॥५८॥

श्रीश्रीवासाभिषिक्तश्च महैश्वर्यप्रकाशकः ।
स्वरूपमिलितो नित्यानन्दषड्भुजदर्शकः ॥५९॥

शंखचक्रगदापद्मशार्ङ्गवेणुधरोऽभयः ।
द्विचक्रवेणुहस्तश्च सुदिव्यैश्वर्यविग्रहः ॥६०॥

मुरलीवादनो वंशीवदनो मुरलीधरः ।
षड्भुजश्च बहुभुजो द्विभुजश्च चतुर्भुजः ॥६१॥

श्यामलः श्यामलाङ्गश्च श्यामश्रीः श्यामसुन्दरः ।
वरपीताम्बरधरो बलकृष्णद्विमूर्तिधृक् ॥६२॥

अंबादृष्टद्विमूर्तिश्च मधुरप्रियविग्रहः ।
पाषण्डयुगलत्राता पाषण्डयुगलाघहृत् ॥६३॥

आसप्तयामभावस्थ आवेशाम्बुधिसंस्थितः ।
वराहभावावेशश्च मुरारिस्कन्धनर्तकः ॥६४॥

शुक्लाम्बरात्तण्डुलभुङ् नामश्लोकसदर्थकृत् ।
वैष्णवाचारसन्तुष्टः स्वपद्याचारशिक्षकः ॥६५॥

श्रीवासाङ्गनवर्षैकरात्रिकीर्तनकारकः ।
नामविघ्नशमोपायो गुप्तकीर्तनकारकः ॥६६॥

दुष्टगोपालचापालकृमिकुष्ठविधायकः ।
व्याधिपीडितगोपालचापालद्विजसंस्तुतः ॥६७॥

दुष्टगोपालचापालापराधात्यन्तरोषकृत् ।
मुकुन्ददत्तदण्डानुग्रहोऽद्वैतार्यभक्तिकृत् ॥६८॥

भक्तयद्वैतातुष्टिदोऽवज्ञानाद्वैतप्रसादकृत् ।
श्रीधरायसपात्रस्थजलपानपरायणः ॥६९॥

भक्तेष्टवरदाता च हरिदासप्रसादकः ।
आचार्यसंमुखाम्बापराधसंपरिखण्डकः ॥७०॥

नामार्थवादिसंत्यागी नाममाहात्म्यवर्णकः ।
भक्तेषु नाममाहात्म्यश्रावको भक्ततोषकः ॥७१॥

गुप्तभाले रामदासाभिधानलिपिकारकः ।
सद्यश्चूतोत्पादकश्च सगणाम्रफलाशनः ॥७२॥

नित्यचूतोत्सवप्रीतो मेघविघ्ननिवारकः ।
गुप्तलीलो नैकलीलो भक्ते लीलाप्रदर्शकः ॥७३॥

सहस्रनामसंश्रोता नृसिंहावेशविग्रहः ।
तेजोमयश्चण्डमूर्तिर्जनद्रावणरूपधृक् ॥७४॥

शिवसंगीतसंश्रोता शिवावेशीशभावधृक् ।
शैवस्कन्धनटो भिक्षुनर्तकप्रेमवर्धकः ॥७५॥

जिज्ञासुर्गणकप्रष्टा ज्योतिर्विद्गणितागतः ।
ज्योतिर्विद्ध्यानगो ज्योतिर्वेत्तृविस्मयकारकः ॥७६॥

ज्योतिर्विदुक्तियाथात्म्यः परिपूर्णो महाविभुः ।
सर्वैश्वर्यमयो नित्यानन्दरूपो महाश्रयः ॥७७॥

कलिद्वापरैकरूपो दुर्विज्ञेयश्च सर्ववित् ।
परतत्त्वं परब्रह्म परेशः परमेश्वरः ॥७८॥

सुनर्मा पूर्ववक्ता च गोपजातिश्च गोपजः ।
गोचारको गवांसेवी पूर्वपुण्यफलाप्रचजः ॥७९॥

ज्योतिर्वित् त्राणकर्ता च बलावेशी बलानुकृत् ।
मध्वोप्सुर्मधुपानेप्सुर्मध्वानयनशासनः ॥८०॥

पात्रस्थगंगाम्बुपायी पानविह्वलनृत्यकृत् ।
यमुनाकर्षकारीच मदमत्तस्खलद्गतिः ॥८१॥

सुवर्णलाङ्गलधरः साक्षाच्छ्रीरामविग्रहः ।
सगणानन्दनृत्यश्च आचतुर्यामनर्तकः ॥८२॥

हरिसंकीर्तनादेशो ग्रामसंकीर्तनोत्सुकः ।
तुरुष्कदण्डदो म्लेच्छाध्यक्षविघ्नविनाशकः ॥८३॥

म्लेच्छानुग्रहकर्ता च म्लेच्छशास्त्रप्रदूषकः ।
गोहितो गोपतिर्गोभृद् गोविन्दो गोहिते रतः ॥८४॥

म्लेच्छप्रसादको नामकीर्तनप्रतिबन्धहा ।
श्रीवासवत्सलः प्रेम्णा पुत्रशोकापनोदनः ॥८५॥

श्रीवासानन्दनो भक्तवरदो भक्ततोषणः ।
स्वभुक्तोच्छिष्टदो नारायणीसंमानकारकः ॥८६॥

श्रीवाससीवकप्रीतः सीवकस्वात्मदर्शकः ।
प्रेमभक्तगणासंगी प्रेमावेशी प्रियश्रवाः ॥८७॥

गोपीभावानुरागी च गोपीनामपरायणः ।
आगस्कृत्त्राणहृदयः संन्यासकरणोत्सुकः ॥८८॥

न्यासिभिक्षाप्रदाता च त्रिसंगी पुरतीर्थगः ।
भारतीकृतसंन्यासस्त्रातृसंन्यासरूपधृक् ॥८९॥

दण्डी दण्डधरो न्यासी संन्यासी च त्रिदण्डधृक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥९०॥

शुभाङ्गः शान्तिदः पूज्यो ब्रह्मसंमानदायकः ।
कृतागोब्राह्मणत्राता संन्यासिज्ञानदायकः ॥९१॥

तुर्याश्रम्याश्रमातीतो विद्वद्ब्रह्मनमस्कृतः ।
न्यासिचूडामणिन्यासिहरिभक्तिप्रदायकः ॥९२॥

अद्वैतध्वान्तविध्वंसी भक्तिपङ्कजभास्करः ।
चतुर्वर्णनमस्यश्च चतुराश्रमपूजितः ॥९३॥

इति आदिलीलानामानि ।

मध्यलीलानामानि ।

श्रीवृन्दावनगः प्रेमविह्वलो बाह्यविस्मृतिः ।
राढभूमिभ्रमो गंगायमुनाभावदर्शनः ॥९४॥

आचार्यगृहभिक्षाकृन्निशाकीर्तनकारकः ।
मात्रादिसर्वमिलनो नीलाद्रिगमनोत्सुकः ॥९५॥

देवताप्रतिमादर्शी लीलादर्शी जनप्रियः ।
माधवाख्यानसंश्रोता विग्रहाख्यानकश्रवाः ॥९६॥

भग्नदण्डः शुद्धतनुरेकाकी च निराश्रमी ।
दारुब्रह्मसमीपस्थो दारुविग्रहदर्शकः ॥९७॥

जगन्नाथद्दशाज्ञानो भावसिन्धुप्रलीनधीः ।
सार्वभौमगृहानीतो दीर्घकालानुचेतनः ॥९८॥

नित्यानन्दानुमिलनो जगदानन्दवीक्षितः ।
मुकुन्दमिलनः सार्वभौमधीरप्रसादकः ॥९९॥

करुणासागरः सार्वभौमैश्वर्यात्मदर्शकः ।
अवाचीतीर्थगन्ता च वैष्णवप्राणनायकः ॥१००॥

वासुदेवव्याधिहरो वासुदेवामृतप्रदः ।
जीयड्नृसिंहसंस्तोता कृष्णनामप्रवर्तनः ॥१०१॥

प्राप्तगोदावरीतीरो वनवृन्दावनभ्रमः ।
रामानन्दसंमिलनो रामानन्दसुसंस्तुतः ॥१०२॥

रामानन्दसदालापो रामानन्दप्रसादकृत् ।
साध्यसाधनतत्त्वज्ञः साध्यसाधनपृच्छकः ॥१०३॥

रामानन्दहृदंभोजसर्वतत्त्वप्रभाकरः ।
रामानन्दोत्तरश्रोता रामानन्दवशीकृतः ॥१०४॥

रामानन्दघनश्यामगौरमूर्तिप्रदर्शकः ।
विद्यापुरजनत्राता अभक्तजनभक्तकृत् ॥ १०५॥

तीर्थीकृत्तीर्थगस्तीर्थी सत्तीर्थस्तीर्थपावनः ।
तीर्थस्नायी तीर्थदर्शी त्रैविध्यजनभक्तकृत् ॥१०६॥

मल्लिकार्जुनभूतेशदर्शी शैवेष्टभक्तकृत् ।
दासराममहादेवदर्शी वैष्णवकारकः ॥१०७॥

त्रिमल्लत्रिपदीदर्शी पाषण्डदलनोत्सुकः ।
श्रीवैष्णवतत्त्ववादिकृष्णभक्तिप्रदायकः ॥१०८॥

अहोबलनृसिंहादिविष्णुविग्रहदर्शकः ।
श्रीसिद्धवटगन्ता च श्रीसीतापतिदर्शकः ॥१०९॥

रामनामजपद्विप्रकृष्णनामप्रवर्तकः ।
स्कन्दक्षेत्रस्कन्ददर्शी श्रीत्रिविक्रमदर्शकः ॥११०॥

वृद्धकाशीशिवालोकी बहुविप्रपुरागमः ।
भक्तिशास्त्री सुतेजस्वी असच्छास्त्रनिकृन्तनः ॥१११॥

गर्विगर्वहरोऽगर्वी गर्वी च सर्वगर्वहा ।
दर्पहा दर्पदो दृप्तो जयी जेता जयप्रदः ॥११२॥

पाषण्डनिग्रहो मायावादसिद्धान्तखण्डकः ।
बौद्धाचार्यजयी बौद्धमतखण्डनकारकः ॥११३॥

बुद्धांशी बुद्धिमान् बुद्धावतारी बौद्धनिग्रहः ।
बौद्धानुग्राहको बौद्धत्राता च बौद्धजीवनः ॥११४॥

वेङ्कटेश्वरदर्शी च बहुतीर्थाटनोत्सुकः ।
शिवकाञ्चीगमः शैवशाक्तवैष्णवकारकः ॥११५॥

विष्णुकाञ्चीगमः श्रीमद् विष्णुस्तुतिपरायणः ।
कृष्णभक्तिप्रदो रङ्गनाथदर्शी सदाश्रयः ॥११६॥

रङ्गक्षेत्रनिवासी च वेङ्कटप्रियकृत्सखः ।
भट्टहृत्संशयच्छेत्ता कृष्णतत्त्वोपदेशकः ॥११७॥

भक्तपाठश्रवानन्दी भक्तपाठकशिक्षकः ।
विप्रविश्वासदाता च सीतातत्त्वोपदेशकः ॥११८॥

विप्रजीवनसंरक्षो भक्तविप्रपरिष्टुतः ।
अनेकदाक्षिणाटाटश्चानेकतीर्थदर्शनः ॥११९॥

कृष्णदाससमुद्धर्ता भट्टमारिजनार्दनः ।
श्रीब्रह्मसंहिताध्यायलाभकृद् वैष्णवादृतः ॥१२०॥

माध्वगर्वखर्वकरः कर्मज्ञानप्रदूषकः ।
स्वर्गापवर्गनरकतुल्यज्ञापक आर्तिहा ॥१२१॥

शङ्करारण्यसंन्यासिभ्राता श्रीरङ्गसौख्यदः ।
कृष्णकर्णामृतास्वादी श्रीकर्णामृतलाभकृत् ॥१२२॥

सप्ततालपरिष्वङ्गः सप्ततालविमोचनः ।
रामावतारविख्यातिः काशीमिश्रप्रसादकृत् ॥१२३॥

काशीमिश्रार्पितप्राणधनगेहपदाम्बुजः ।
काशीमिश्रषडैश्वर्यपूर्णविग्रहदर्शकः ॥१२४॥

भक्तात्मदो भक्तसंगी भक्ताप्यो भक्तजीवनः ।
श्रीमद्‌विष्णुप्रसादाशी प्रसादगुणवर्णकः ॥१२५॥

नीलाचलजनानन्दी नीलाचलजनप्रियः ।
भवानन्देश्वरो वाणीनाथसेव्यो वरप्रदः ॥१२६॥

स्वरूपानन्ददो भृत्यगोविन्दकृतसेवनः ।
ब्रह्मानन्दबहिर्वासप्रदाता वेशशोधकः ॥१२७॥

शून्यध्यानतिरस्कर्ता कृष्णैकध्यानसिद्धिदः ।
विधिहेयोपदेष्टा च रागमार्गोपदेशकः ॥१२८॥

स्ववर्गमिलनो भक्तप्रेमालिङ्गनतत्परः ।
अमानी मानदो मान्यः अमानिजनमानदः ॥१२९॥

अद्वैतप्रेमसंश्लेषो वासुदेवप्रमोदकः ।
जगदानन्दकारुण्यः शङ्करस्नेहकारकः ॥१३०॥

श्रीवासप्रीतिदः प्रीतः श्रीवासस्नेहभाषणः ।
शिवानन्दानुरागी च मुरारिदेहमार्जकः ॥१३१॥

वक्रेश्वरप्रीतमना नारायणपरप्रियः ।
श्रीमत्पण्डितसंह्लादो बुधराघवसुप्रियः ॥१३२॥

वासुमाधवगोविन्दघोषकीर्तनसुप्रियः ।
शुक्लाम्बरप्रेमदः श्रीकान्तनारायणप्रियः ॥१३३॥

श्रीनरविजयार्हः श्रीनृसिंहानन्दनन्ददः।
वल्लभसेनसुखदः पुरुषोत्तमनन्ददः ॥१३४॥

सञ्जयानन्ददः सत्यराजखानकृपाकरः।
रामानन्दवसुप्रीतो मुकुन्ददाससुप्रियः ॥१३५॥

श्रीरघुनन्दनप्रीतः श्रीमन्नरहरिप्रियः।
खण्डवासिचिरञ्जीवदास्यदः स्वजनप्रियः ॥१३६॥

सुलोचनप्रियो भक्तश्लेषः आत्मरतिप्रदः।
आचार्यरत्नगुणगो विद्यानिधिगुणग्रहः ॥१३७॥

गदाधरगुणग्राही गंगादासगुणग्रहः।
हरिभट्टगुणग्राही पुरन्दरगुणग्रहः ॥१३८॥

विनयी विनयासक्तो हरिदासात्मदेहदः।
हरिदासपरप्रीतिः प्रसादपरिवेषणः ॥१३९॥

सभक्तगणसंन्यासिप्रसादान्नादिभक्षकः।
महानृत्यो महाप्रेमा संकीर्तनमहोज्ज्वलः ॥१४०॥

नीलाचलजनानन्ददाता कृतमहोत्सवः।
प्रसादवण्टको दिव्यलीलाकारी सुखप्रदः ॥१४१॥

स्वतंत्रः प्रेमतंत्रश्च भक्ततंत्रः सदग्रणीः।
नृपनन्दनसन्तोषी श्रीमन्मन्दिरमार्जकः ॥१४२॥

श्रीसिंहासनसंस्कारी संस्कारकार्यशिक्षकः।
सहुङ्कारोद्दण्डनृत्यकारी सात्विकचिह्नधृक् ॥१४३॥

भूकंपकरनृत्यश्च गोपालचेतनाप्रदः।
भोक्ता भोजयिता शाकप्रियोऽप्युत्तमभोज्यभुक् ॥१४४॥

जगदानन्दसन्तोषी भक्तोपद्धतिभक्षकः ।
रथस्थविष्णुसन्द्रष्टा रथयात्रामहोत्सवी ॥१४५॥

वैष्णवाभ्रघटानन्दो नामाश्रुजलवर्षकः ।
उद्दण्डनृत्यकारी च दिव्यत्सात्त्विकलक्षणः ॥१४६॥

युगपद्दलसन्दर्शी युगपद्दलसप्नगः ।
लीलाविवर्तभावज्ञो लालसाश्लोकपाठकः ॥१४७॥

प्रतापरुद्रकरुणः स्थिरस्यन्दनचालकः ।
इन्द्रद्युम्नजलक्रीडोऽद्वैतशेषशयेशयः ॥१४८॥

सुन्दराचलगन्ता च रसतत्त्वसुखश्रवाः ।
दामोदरसहालापः श्रीवासवर्णनश्रवाः ॥१४९॥

श्रीराधयोर्गुणश्रोता राधिकाप्रेमविह्वलः ।
वसुसत्यादेशकरो वसुसत्यकृपाकरः ॥१५०॥

पूजाशेषतुलस्याद्यद्वैताचार्यप्रपूजकः ।
मुखवाद्यकरोऽद्वैतभिक्षानित्यनिमंत्रितः ॥१५१॥

गोपवेशधरः कृष्णजन्मघस्रमहोत्सवी ।
सनित्यानन्दलगुडचालको विजयोत्सवी ॥१५२॥

हनुमत्परमावेशो रासदीपोत्सवादिदृक् ।
स्वभक्तसंमानयिता मापराधक्षमापनः ॥१५३॥

भुक्तान्नज्ञापकः कृष्णप्राणनाथपदप्रियः ।
गुणराजातिविनयी वसुसत्योपदेशकः ॥१५४॥

भक्तचिह्नोपदेष्टा च नाममाहात्म्यवर्णकः ।
श्रीनरहरिसन्तुष्टः सार्वभौमोपदेशकः ॥१५५॥

वाचस्पत्युपदेष्टा च श्रीमुरारिपरीक्षकः ।
वासुदेवगुणाकृष्टो वैष्णवप्राणनायकः ॥१५६॥

स्वभक्तगुणवक्ता च भक्तानुग्रहकातरः ।
गदाधरगुणाकृष्टो भक्तविच्छेदकातरः ॥१५७॥

पुर्यादिसहसंवासी सार्वभौमानुरोधभृत् ।
भट्टभिक्षानुमोदी च प्रचुरान्नादिभोजकः ॥१५८॥

अमोघागःक्षमोऽमोघापराधपरिभञ्जनः ।
अमोघप्राणदोऽमोघनिजभक्तिप्रदायकः ॥१५९॥

भक्तेच्छापूरको गौडगौरभक्तानुमिश्रणः ।
प्रतापरुद्रसंत्राता म्लेच्छराजप्रसादकृत् ॥१६०॥

नाविकानुग्राहकश्च कुलियाग्रामतारकः ।
दुष्टगोपालचापालकृमिकुष्ठनिवारकः ॥१६१॥

अद्वैतालयगन्ता च शचीदुःखान्तकारकः ।
शचीदर्शनदाता च शचीप्रीतिविवर्धनः ॥१६२॥

रूपसनातनग्राही रघुनाथकृपाकरः ।
बलभद्रैकसार्थश्च हिंस्रसेव्यपथक्रमः ॥१६३॥

व्याघ्रादिमध्यगन्ता च पशुकीर्तनकारकः ।
मृगसंगी मृगसखो हिंस्राहिंस्रैकवर्तनः ॥१६४॥

मयूराद्यनुसंगश्च तिर्यक्कौतुकदर्शकः ।
नृत्यगीतानन्दगतिः प्रफुल्लद्रुलताध्वनिः ॥१६५॥

जङ्गमाजङ्गमानन्ददाता वनगतिप्रियः ।
महानन्दनगो वन्यकन्दशाकफलप्रियः ॥१६६॥

वनमार्गसुखास्वादी वनग्रामिसुभक्तिद: ।
वाराणसीतीर्थगश्च तपनातिसुखप्रद: ॥१६७॥

श्रीमणिकर्णिकास्नायी श्रीविश्वेश्वरदर्शक: ।
बिन्दुमाधवसन्दर्शी तपनालयपावन: ॥१६८॥

चन्द्रशेखरसंपूज्यो भिक्षार्थब्रह्मवञ्चक: ।
कृष्णापराध्यद्रष्टश्च मायावादिविडंबक: ॥१६९॥

प्रयागतीर्थस्नायी च वेणीमाधवदर्शक: ।
मथुरानगरीदर्शी मथुराप्रणमस्कर: ॥१७०॥

विश्रामतीर्थसुस्नायी श्रीमत्केशवदर्शक: ।
पुरीशिष्यानुमिलित: पुरीशिष्यप्रतोषक: ॥१७१॥

यमुनाद्वादशयुगतीर्थस्नानपरायण: ।
गोकर्णादिकदर्शी च विप्रसंगी वनभ्रमी ॥१७२॥

गोघटावेष्टितो गोऽङ्गसेवी मृगगणावृत: ।
पिकादिगीयमानश्च शिखिनृत्यप्रदर्शित: ॥१७३॥

चारुफुल्ललतागुल्मसेवितश्रीपदाम्बुज: ।
वृक्षगुल्मलताश्लेषी शारीशुकपद्यश्रवा: ॥१७४॥

शश्वत्प्रेमाविष्टचित्तो राधाकुण्डैषणोन्मुख: ।
लुप्तकुण्डोदकस्नायी श्रीगोवर्धनदर्शक: ॥१७५॥

गिरिप्रदक्षिणकर: शैलगोपालदर्शक: ।
सर्वकुण्डजलस्नायी रासमण्डलदर्शक: ॥१७६॥

प्राचीनतिन्तिडीवृक्षतलविश्रामकारक: ।
कृष्णदासगुणाकृष्ट: कृष्णदासकृपाकर: ॥१७७॥

निर्विशेषाद्वयब्रह्मवादवादनिरासकृत् ।
सभृत्यम्लेच्छसंत्राता श्रीरूपवल्लभाङ्गीकृत् ॥१७८॥

श्रीरूपशक्तिसञ्चारः श्रीरूपभक्तिशिक्षकः ।
शान्तादिरसतत्त्वज्ञः शान्तादिरसवर्णकः ॥१७९॥

माधुर्यातिप्रियः प्रेमभक्तितत्त्वोपदेशकः ।
सनातनानुकंपश्च सनातनसुशिक्षकः ॥१८०॥

निःसीमकरुणापूर्णः सर्वतत्त्वप्रकाशकः ।
शुद्धवैराग्यदाता च निजभक्तविशोधकः ॥१८१॥

सनातनगुरुः सर्वशास्त्रसिद्धान्तकारकः ।
सनातनादेशकरो निजभक्तेष्टसिद्धिदः ॥१८२॥

न्यास्यन्तर्द्रवकृन्मायावादिभक्तिप्रदायकः ।
सूत्रमुख्यार्थकर्ता च प्रकाशानन्दभक्तिदः ॥१८३॥

प्रकाशानन्दसंत्राता काशीनिस्तारकारकः ।
सुबुद्धितारकः काशीवासिवैष्णवकारकः ॥१८४॥

इति मध्यलीलानामानि ।

अन्त्यलीलानामानि ।

शिवानन्दशुनस्त्राता रूपनाटकसंश्रवाः ।
भक्तावेशो भक्तधामाविर्भावो नकुलान्तरः॥१८५॥

प्रद्युम्नभक्ताविर्भावः शिवानन्दप्रबोधनः ।
शिवानन्दद्वैधहरो हरिदाससुदण्डदः ॥१८६॥

हरिदासप्रसादश्च छलस्वजनशिक्षकः ।
भक्तवाक्यदण्डसहो मातृसन्तोषदायकः ॥१८७॥

निर्विशेषाद्वयब्रह्मवादवादनिरासकृत् ।
सभृत्यम्लेच्छसंत्राता श्रीरूपवल्लभाङ्गीकृत् ॥१७८॥

श्रीरूपशक्तिसञ्चारः श्रीरूपभक्तिशिक्षकः ।
शान्तादिरसतत्त्वज्ञः शान्तादिरसवर्णकः ॥१७९॥

माधुर्यातिप्रियः प्रेमभक्तितत्त्वोपदेशकः ।
सनातनानुकंपश्च सनातनसुशिक्षकः ॥१८०॥

निःसीमकरुणापूर्णः सर्वतत्त्वप्रकाशकः ।
शुद्धवैराग्यदाता च निजभक्तविशोधकः ॥१८१॥

सनातनगुरुः सर्वशास्त्रसिद्धान्तकारकः ।
सनातनादेशकरो निजभक्तेष्टसिद्धिदः ॥१८२॥

न्यास्यन्तर्द्रवकृन्मायावादिभक्तिप्रदायकः ।
सूत्रमुख्यार्थकर्ता च प्रकाशानन्दभक्तिदः ॥१८३॥

प्रकाशानन्दसंत्राता काशीनिस्तारकारकः ।
सुबुद्धितारकः काशीवासिवैष्णवकारकः ॥१८४॥

इति मध्यलीलानामानि ।

अन्त्यलीलानामानि ।

शिवानन्दशुनस्त्राता रूपनाटकसंश्रवाः ।
भक्तावेशो भक्तधामाविर्भावो नकुलान्तरः॥१८५॥

प्रद्युम्नभक्ताविर्भावः शिवानन्दप्रबोधनः ।
शिवानन्दद्वैधहरो हरिदाससुदण्डदः ॥१८६॥

हरिदासप्रसादश्च छलस्वजनशिक्षकः ।
भक्तवाक्यदण्डसहो मातृसन्तोषदायकः ॥१८७॥

स्वभक्तात् स्वगुणश्रोता स्वभक्तगुणभाषकः ।
समर्पितस्वभक्ताङ्गो भक्तजीवनरक्षकः ॥१८८॥

सनातनादेशदश्च भक्ताङ्गमिलनाग्रहः ।
स्वभक्तलालको भक्तवपुर्निर्मलकारकः ॥१८९॥

लुप्ततीर्थोद्धारयिता रघुनाथप्रसाददः ।
राघवानन्ददाता च रघुनाथावखण्डनः ॥१९०॥

रघुनाथोपदेष्टा च भट्टगर्वविखण्डनः ।
पूतहृद्वल्लभदयो भट्टदैन्यसुसंस्तुतः ॥१९१॥

गदाधरप्राणनाथो जगदानन्दचापलः ।
भवानन्दात्मजत्राता मुन्यादिद्दष्टविग्रहः ॥१९२॥

नित्यानन्दादिमिलितो नरेन्द्रजलखेलनः ।
दमयन्तीरातग्राही ओड्रगीतानुमोदनः ॥१९३॥

भृत्यार्तिहा भृत्यपालो भृत्यदोषानुमोदनः ।
भृत्यसेवातिसन्तुष्टो भृत्यगोविन्दसेवितः ॥१९४॥

हरिदासोत्क्रमोन्मादो हरिदासान्त्यकर्मकृत् ।
हरिदासोत्सवानन्दो हरिदासप्रसादकृत् ॥१९५॥

शिवानन्दमहानन्दः रघुनाथदयाकरः ।
श्रीकृष्णविरहोन्मादो गोपीव विरहातुरः ॥१९६॥

प्रेमाद्भुतविकारश्च कालीदासमहाकृपः ।
पुरीदासानुकंपश्च कूर्माङ्गो गोष्ठभावनः ॥१९७॥

मातृभक्ताग्रगण्यश्च मातृतोषणतत्परः ।
समुद्रवारिपतनो धीवरप्रेमदायकः ॥१९८॥

वृषभानुसुतावेशो दिव्योन्मादप्रदर्शनः ।
कृष्णाङ्गसौरभघ्राता कृष्णदर्शनलालसः ॥१९९॥
स्वश्लोकार्थरसास्वादी बाह्यचक्षुरदर्शनः ।
भक्तदर्शनदो दिव्यधामस्थो दिव्यदर्शनः ॥२००॥
सर्वापराधशमनो भक्तहृत्कमलस्थितः ।
अनन्तादित्यसङ्काशः स्वपादाम्बुजदास्यदः ॥२०१॥
स्मृतसर्वाघशमनः कीर्तितप्रेमभक्तिदः ।
हरिसंकीर्तनारंभप्रेमनामाभिकीर्तनः ॥२०२॥
परंपराभक्तगणप्रेमभक्तिप्रवर्धनः ।
आकलिप्रेमनामाभिकीर्तनः सात्त्विकप्रियः ॥२०३॥
संकीर्तनमहायज्ञैर्याज्योऽपर्याप्तवर्णनः ॥२०४॥

इत्यन्त्यलीलानामानि ।

एतत् सहस्रं नाम्नां च श्रीचैतन्यपरात्मनः ।
यः पठेत् प्रयतो भूत्वा स परं पदमाप्नुयात् ॥२०५॥
मुक्तः सर्वापराधेभ्यः प्रेमभक्तियुतो भवेत् ।
देहान्ते कृष्णचैतन्यस्मृतिर्भवति शाश्वती ॥२०६॥
फाल्गुन्यामर्चयित्वा य एकावृत्त्या पठेज्जनः ।
यद्‌यत् कामयते कामं लभते तद्‌यत्नतः ॥२०७॥
नामसंकीर्तनं यस्य प्रेमभक्तिविवर्धनम् ।
पूजा च दास्यदा तस्य तं श्रीगौरमहं भजे ॥२०८॥
कृष्णाय गौरवर्णाय हरये रसरूपिणे ।
हरिभक्तशरण्याय प्रेमदाय नमो नमः ॥२०९॥

इति श्रीचैतन्यदासचिरञ्जीवीसर्वाधिकारि-विरचितं
श्रीकृष्णचैतन्यचन्द्रस्य सहस्रनामस्तोत्रं (३) संपूर्णम् ।

# श्रीगौरप्रेमोल्लासस्तोत्रम् ।

शार्दूलविक्रीडितम् ।

सद्वृन्दावनसन्तत-प्रणयतः श्रीकृष्णचन्द्रायते
नित्यं यः खरदूषण-प्रहरणात् श्रीरामचन्द्रायते ।
प्रह्लादोदितवैभवेन वपुषा यः श्रीनृसिंहायते
तस्मै केलिरसार्णवाय च नमः श्रीगौरचन्द्राय ते ॥ १ ॥

पूर्वाशां समलंकरोति महसा श्रीकण्ठशोभः सदा
राधाभावसमन्वितः सुखकरः सन्मण्डलप्रीतिदः ।
रामानन्दमहोत्सवो विजयते गौरांगचन्द्रः सदा
आरूढोद्विजराजराजपदवीं कान्त्युल्लसत्तारकः ॥ २ ॥

प्रेमोद्गारमिवाश्रुभिर्विगलितैर्भूयोऽवनायोद्यतैः
सिंचन्भक्तिलतांकुरं कलियुगप्रारंभतो जर्जरम् ।
लोके पल्लवितं चकार कृपया संकल्पकल्पद्रुम-
श्चित्तं कस्य वशीकरोति न सखे स श्रीशचीनन्दनः ॥ ३ ॥

याचे नैवपुलोमजापतिपदं नो सार्वभौमं सुखं
नोकैलासविलासमप्यविरतं वैकुण्ठवासं न वा ।
कैवल्यं न च नैव सिद्धिपदवीं न ब्रह्मलोकेशतां
भूयाज्जन्मनि जन्मनि प्रतिपदं चेद् गौरपादे रतिः ॥ ४ ॥

संगः स्याद्यदि तर्हि गौरचरणांभोजैकबद्धस्पृहैः
प्रीतिः स्याद्यदि तर्हि गौरचरणे संकल्पकल्पद्रुमे ।
वासः स्याद्यदि तर्हि कुत्र सततं चैतन्यदेवालये
जन्म स्याद्यदि तद्ध्रुवं किमपरं चैतन्यसेवास्पदम् ॥ ५ ॥

नानाशास्त्रपुराणपारपदवी बुद्धया समालोडिता
वेदान्ता अपि शीलिताः प्रतिदिनं योगेऽपि योगः कृतः।
वादव्याधिहराः परावधिमितास्ते पंडिताः सेविता-
श्चित्तं क्वापि न मे स्थिरत्वमगमच्चैतन्यपादं विना।। ६ ।।

कालव्यालभयेन हन्त जगति भ्रान्तं मया सर्वतो
ब्रह्माद्याः समुपासिता अपि परं कैर्नाप्यहं रक्षितः ।
त्यक्त्वा तत्सकलं मयाद्य भवतः पादौ समालिंगितौ
त्वं चेन्नैव कृपां करोषि तदहो निर्वीरमुर्वीतलम् ।। ७ ।।

आनन्देन परिप्लुता इव दिशो विश्वं समस्तं तथा
स्नातं प्रेमपयोनिधाविव रसाधारा धरा दृश्यते ।
उन्मत्ता इव मानुषा जननि हे किं कारणं तद्वद
त्वं जानासि न बाल्यमुग्धहृदये गौरोऽधुना नृत्यति ।।८।।

रोमांचं स्फुटमंचते तरुगणो मन्दाकिनी मन्दता-
मालेख्यार्पितविग्रहा इव सुराः प्रेमाश्रुपूरं दधुः ।
कर्णौन्नत्यमहो विधाय हरिणाः कुंजेषु तस्थुश्चिरं
गौरे गायति सुस्वरेण मधुरां कण्ठेन कीर्तिं हरेः ।। ९ ।।

सौन्दर्येण सुरांगनाः सुरगणा लीलारसेनामुना
माधुर्येण च बान्धवा हरिकथास्वादेन भक्ता हरेः ।
स्ववासेन च पापिनोऽपि नितरां वैराग्यतो योगिनः
श्रीमद्गौरमहाप्रभोः करुणया के के न सन्तर्पिताः ।।१०।।

त्यक्त्वा मित्रकलत्रपुत्रसहितं सर्वं जगद्वैभवं
लोका हन्त विरक्तभक्तपदवीं नित्यं भजन्ते कथम् ।
इत्थं यः कुतुकेन तान् रसयितुं भक्तावतारोऽभव-
ल्लोकातीतगुणोदयो विजयते स श्रीशचीनन्दनः ।।११।।

यो यं ध्यायति तस्यरूपसमतां प्राप्नोति सत्यं वचः
　कीटोपिभ्रमरींभजन्भययुतः साम्यं तदीयं गतः ।
तच्छंके　व्रजखंजरीटनयनां　हेमांबुजाभप्रभां
　ध्यायन् हन्त निरन्तरं व्रजपतिः श्यामोऽपि गौरोऽभवत्॥१२

त्वां संन्यासगतं विलोक्य भगवन् संन्यासमाप्तः कलिः
　क्रूरां स्वां प्रकृतिं विहाय तदहं शंके स्वचातुर्यतः ।
नोचेत्साधुतया सह प्रतिदिनं धर्मस्य वृद्धिः कथं
　लोभक्रोधपराभवानृतगणो नास्मिन् कलौ लक्ष्यते ॥१३॥

तावत्　पापरतिर्भवेत्तदवधि　क्रोधानृतोपद्रव-
　स्तावत्कालपराभवादपिभयं तावच्च मायाबलम् ।
मोहः पुत्रकलत्रमित्रभवने तावद् भवेद्दुष्टता
　यावद् गौरमहाप्रभोः क्षणमपि स्यान्नैव संगो जनैः॥१४॥

लीलापांगतरंगिता युवतयोप्यालिंगिताः किं तत-
　श्चञ्चच्चामरचारुमारुतसुखं यत्सेवितं किं ततः ।
नित्यं　मत्तमतंगजेन्द्रतुरगैर्यद्वाह्यते　किं　ततः
　श्रीमद्गौरपदारविन्दमधुपैः संबंधगंधो न चेत् ॥१५॥

रे पाण्डित्यवितर्ककर्कशधियः श्राव्यं मदीयं वचो
　नानावादविवादमादकरसैः कालो वृथा नीयते ।
वांछा चेद् भवतां मुरासुररिपोर्लीलारसास्वादने
　श्रीमद्गौरपदारविन्दयुगलं नित्यं तदा सेव्यताम् ॥१६॥

केचित्त्वद्गुणगानतः स्मरणतः केचिन्महापापिनः
　केचिन्मुक्तिमिता कथाश्रवणतः केचित्प्रभोर्दर्शनात् ।
इत्थं वीक्ष्य समस्तपापिसुगतिं दूतान् विसर्ज्याधुना
　प्रस्थाप्य स्वपिति स्वयं च ससुखं श्रीचित्रगुप्तं यमः॥१७॥

केचिच्छब्दविचारचारुमतयः केचिच्च मीमांसकाः
केचित्काव्यरसावगाहनधियः केचित्तु नैयायिकाः ।
केचिद् ज्ञाननिधानमानसरताः केचित्तु पौराणिकाः
श्रीमद्गौरहरेर्वयं तु चरणांभोजैकबद्धस्पृहाः ॥१८॥

नित्यानन्दरसार्णवं स्वचरितैरद्वैतभावास्पदं
रामानन्दयुतं सनातनपदं रूपेण विभ्राजितम् ।
लीलालोलगदाधरं करुणया तं श्रीनिवासास्पदं
नित्यं मित्र हरिप्रियाभिलषितं गौरञ्च कृष्णं भज ॥१९॥

भिन्दन्पापपरंपरां प्रतिदिनं छिन्दन्कलेर्वैभवं
निन्दन्भक्तिविहीनदीनपदवीं विन्दन्नपूर्वां मुदम् ।
क्रन्दन्भक्तिरसे कदापि च हसन् स्पन्दन् हरिं गापयन्
वन्दन्भक्तिरसापगां विलसति श्रीगौरचन्द्रो हरिः ॥२०॥

भक्तिं कन्दलयन् कलिं कवलयन् प्रेमाब्धिमुद्वेलयन्
मोहं व्याकुलयन् रसं च कलयन् लोभं च निर्मूलयन् ।
पापं निर्बलयन् धृतिं सँबलयन् कल्लोलयन् मानसं
देवः कोऽपि चमत्कृतो विजयते चैतन्यचन्द्रः प्रभुः ॥२१॥

वह्निः शीतलतां व्रजेद्यदि गिरिः स्याच्चञ्चलो वायुना
पाथोधिर्मरुदेशतामुदयते सूर्योऽपिचेत्पश्चिमे ।
अन्यत् किं कथयामि धातृरचना चेद्वैपरीत्यंभजे-
त्तर्हि श्रीगुरुगौरचन्द्रविमुखे प्रेम्णो लवस्योदयः ॥२२॥

आरोढुं कनकाचलस्य शिखरं पंगुर्यथा वांछति
हस्ताभ्यां विधुमण्डलं लघुजनोप्यादातुमाकांक्ष्यति ।
कैलासं श्वसितानिलेन च यथाप्युद्धर्तुमुद्वीक्षते
गन्तुं हन्त तथैव गौरविमुखो वैकुण्ठमुत्कण्ठते ॥२३॥

मन्दाक्रान्ता ।

ज्ञानध्यानव्रतजपतपोयज्ञयोगादिकानि-
क्षीणान्यन्यान्यपि कलियुगे साधनानि प्रमादात् ।
चेतश्चिन्ता तदपि न मनाक् मित्र कार्या कदापि
यच्चैतन्यप्रकटमहिमा वर्त्ततेऽद्यापि लोके ॥२४॥

जाता कीर्त्तिर्भुवि विरचिता स्वर्गसोपानपंक्तिः
त्रस्ताः पापाः सपदि वपुषो दूरयात्रां वितेनुः ।
स्नातं राधाप्रणयसरसि व्याधिमुक्तेन तेन
येन भ्रान्त्याप्यहह गदितं हन्त चैतन्यनाम ॥२५॥

विद्यादाता जगति जयति श्रीमहेशो नराणां
संपद्दाता भवति वरुणो मुक्तिदाता मुकुन्दः ।
दाता सूर्यो जगति महसः स्वर्गदाता सुरेशः
श्रीचैतन्यप्रियमिह विना प्रेमदाता न कश्चित् ॥२६॥

गौरपादांभोजबहिर्लापिका ।

मन्दाक्रान्ता ।

पूज्याग्रे का भवति विदुषां पर्वयात्रोत्सवेषु
पंगो संबोधनमहह किं शीतलं वस्तु किं स्यात् ।
विद्वांसः कं जगति सततं सृष्टिकर्तारमाहुः
किं संसारव्यतिकरहरं विज्ञवर्या वदन्ति ॥२७॥

स्रग्धरा ।

रंभास्तंभाभिरामं सितहसितरुचिं कुण्डलाक्रान्तगण्डं
शीतांशुस्फीतवक्त्रं मदनमदनमच्चंचलापांगरम्यम् ।
कन्दर्पं दर्पयन्तं निजनववपुषो हेमगौरच्छटाभिः
श्रीमच्चैतन्यचन्द्रं कनकशुचिरुचिं सावधूतं स्मरामि ॥२८॥

केचिद् भक्ताः प्रमोदाद्विदधति सरवांल्लोलदंगान्मृदंगान्
केचित्प्रेमाश्रुपूरैर्नयनविगलितैः प्लावयन्ते त्रिलोकम् ।
केचिद् गर्जन्ति वर्षाघनगणतरला वादयन्तो घनानि
तेषां मध्येति हर्षात्कलिमलदमनो गौरचन्द्रो ननर्त ॥२९॥

पृथ्वी ।

अहो कलियुगव्यथाव्यथितमानसा मानुषाः
यदि प्रबलकालजामतितितीर्षवो वेदनाम् ।
तदा प्रणयपद्धतिप्रकटनैकदीक्षागुरुं
सदासुखकरं मुदा भजत गौरपादांबुजम् ॥३०॥

शचीजठरसागरात्सपदि नाऽभविष्यत्सखे
स गौडकुलचन्द्रमा यदि दुरन्तभावे कलौ ।
तदा मदनमोहनश्रवणकीर्तनप्रक्रिया
रसज्ञपदवीं परां जगति कोऽगमिष्यज्जनः ॥३१॥

विदग्धजनसेविता परमहंसबद्धादरा
सदा घनरसोन्नता कुवलयप्रमोदोदया ।
अशेषजनतापहा मम मनोमरुप्रांगणे
तव प्रणयवर्जिते वहतु कीर्तिकल्लोलिनी ॥३२॥

शिखरिणी ।

प्रभो त्यक्त्वा सर्वं यमनियमयोगादिकमहो
कथां ते साधूनां सदसि सकृदाकर्ण्य सहसा ।
भवन्तं प्राप्तोऽहं शरणमथ न त्वं कृपयसि
त्वदीयानां कीर्तेस्तवच भविता हास्यमधुना ॥३३॥

हताः श्रीकृष्णेन प्रकटपदमापुर्दनुसुताः
प्रभौ नैतच्चित्रं चतुरहृदि वासं विदधति ।

इमां दृष्ट्वा लीलां तव भुवि न को विस्मयपदे
पदं धत्ते यत्त्वं प्रणयपयसि स्नापयसि तान् ॥३४॥

न योगे संयोगो न च जपतपः साधनबलं
न चोत्संगस्तुंगैः क्वचिदपि तरंगैस्त्रिपथगैः ।
न च ज्ञानाशंसैरपिपरमहंसैः सह रतिः
परं ते कारुण्यस्मरणवशतो जीवति जनः ॥३५॥

न वेदानां भेदा न च जपतपस्त्यागनियमाः
न च स्नानं ध्यानं न वनवसतिर्मौनमपि नो ।
न संन्याससन्यासो न च सकलतीर्थाटनमपि
पुनाति स्वच्छन्दं जगति मनुजं गौरविमुखम् ॥३६॥

अन्तर्लापिका ।

मुग्धसौरभम् ।

कं व्यथाजनकं वदन्ति दधुर्विरक्तगणाश्च कं
कं यजन्ति जना नदीजलचारिणं च वदन्ति कम् ।
दुर्धरं निगदन्ति कं रिपुभिः शिवश्चजघास कं
प्रेमदं कमुदीरयन्ति जनाः "शचीसुतनागरम्" ॥३७॥

चारुचंचललोचनांचलवक्त्रबिंबविनिर्जितो
लज्जया न शशी दिवा प्रकटो हरेर्भवति क्वचित् ।
यामिनीसमयेऽपि स स्मरते यदा स्वविडंबनं
लज्जयैव तिरोदधाति घनांचलेन मुखं निजम् ॥३८॥

मालिनी ।

दनुतनयकुटुंबक्षेत्रदावाग्नितुल्याः
कति जगति बभूवुर्नावतारा मुरारेः ।
प्रणयरसतरंगस्नापितस्थावरान्तः
कथय कथय कोऽन्यस्तं विना गौरचन्द्रम् ॥३९॥

यदवधि सखि भूमौ गौरचन्द्रोऽवतीर्ण-
स्तदवधि किल देवास्तत्यजुः स्वर्गलोकम् ।
नटनचटुलगौरप्रेक्षणप्राप्तदिव्या-
वयवमनुजराजीवाससंकीर्णदेशम् ॥४०॥

जगदतुलविहारे सर्वसंसारसारे
प्रणयरसकदंबे क्षिप्तकोटीन्दुबिंबे ।
अमलकमलमाले श्रीजगन्नाथबाले
मम रतिरतिपुण्या नित्यमेवास्तु धन्या ॥४१॥

वसन्ततिलका ।

गौरेतिवर्णयुगलं पतितं न कर्णे
चित्तं न वित्तमिब वांछति गौरपादम् ।
येषां महाद्भुतमिदं कलयन्तु तेऽपि
संसारसिन्धुतरणाय समुल्लसन्ति ॥४२॥

चेन्मानयन्तु वचनं मम सावधाना
बद्धादराश्च कलयन्तु तदा वदामि ।
योगादिकं सकलमेव विहाय यत्ना-
च्चैतन्यचन्द्रचरणे कुरुतानुरागम् ॥४३॥

चैतन्यचन्द्र करुणार्णव माधवेति
गौरांगदेव रससागर सुन्दरेति ।
भक्तोत्सवेति च शचीतनयेति कण्ठं
नामावली तव मदीयमलंकरोतु ॥४४॥

पूर्णा सदा घनरसेन विदग्धसेव्या
छायाधिका जनसमूहकृताभिलाषा ।

संसारघोरपथि जीवनदायिनी सा
प्रेमप्रिया हरतु ते मम चित्ततृष्णाम् ॥४५॥

पुष्पिताग्रा ।

बकुलमुकुलकुण्डलेन गण्ड-
स्थलगमनेन विलोललोचनान्तः ।
क्वचिदपि न सुवर्णगौरवर्णो
हरिरवलोकि धिगस्तु जीवनं तत् ॥४६॥

तदवधि विविधप्रयासपुंजो
भुवि भववैभवमस्तु तावदेव ।
यदवधि कलिकुंजरैकमर्दी
वितरति गौरहरिः पदं न चित्ते ॥४७॥

कनककमलगौर ! केन वर्ण्य-
स्तवमहिमा विधिनाऽपिदुर्विभाव्यः ।
विलसति किल कोऽपि यत्प्रभावो
भुवि पतिता अपि यद्गताख्रिणाकम् ॥४८॥

प्रहर्षिणी ।

गौरांग स्नपिततला मुदाऽश्रुनीरै-
स्तत्पादस्थितनखरत्नकान्तियुक्ता ।
रोमांचं नवतृणकैतवाद्दधाना
वैकुण्ठं हसति महोत्सवा धरित्री ॥४९॥

किं प्रेम्णः प्रकटतरः प्रवाह एष
कन्दर्पः किमयमनंगतां जिहानः ।
किं वायं शुचिरस एव मूर्तिधारी
विज्ञानामिति मतयः स्फुरन्ति गौरम् ॥५०॥

भुजंगप्रयातम् ।

ननर्त प्रियाभिः कलिन्दात्मजाया-
स्तटे नन्दसूनुर्मिलिन्दादरे यः ।
स एवाद्य मन्दाकिनीनीरतीरे
स्वभक्तैर्हि नृत्यत्यहो गौरमूर्तिः ॥५१॥

न चेद् गौरमीशं स्फुटैश्वर्ययुक्तं
वदन्त्यज्ञसंघास्तदा मा वदन्तु ।
उलूकैर्यदि प्रेक्ष्यते नार्कबिंबं
दिनेऽपि प्रबुद्धांबुजं तत्क्षतिः का ॥५२॥

समुल्लंघ्य लज्जानदीं धैर्यवृत्तिं
विभिन्दन्बलेनान्तरं मे प्रविश्य ।
अहो चित्तचिन्तामणिं कोऽपि चौरो
जहाराशु गौरो वयं तन्न विद्मः ॥५३॥

कदा श्रीनवद्वीपमध्ये विलोक्य
भवज्जन्मपुण्यस्थलं गौरचन्द्र !
प्रमोदेन तद्वासिनो भक्तवर्यान्
प्रभो हन्त पृच्छाम्यहं त्वच्चरित्रम् ॥५४॥

तोटकम् ।

बलिना कलिना जगदेव जितं
सह योगतपोव्रतदानयमैः ।
न जितास्ति परं जगति प्रकटा
नवकांचनगौरहरेः करुणा ॥५५॥

प्रमदाः समदास्तनयः सनयः
सधनं भवनं च कलाः सकलाः ।

मरणे न हि रक्षति कोऽपि तत-
श्चरणं शरणं व्रज गौरहरेः ॥५६॥

विधिना विधिना परिचर्य विभुं
कलिता कलितापहरी करुणा ।
भवतो भव तोषयुतस्त्वमत-
श्चरणा चरणाञ्जितपद्मतते ॥५७॥

त्वयि सद्विनयेन न येन रती
रचितापि न तेन नतेन कृती ।
अपि सौमनसो मनसो न रति-
र्यदि तज्जननं जननन्दित धिक् ॥५८॥

नवकांचनकोमलताऽमलता
भुविभान्ति विलासकलाः सकलाः ।
रतिरध्वनि तच्चरणे च रणे-
मरणेऽपि दृढा भवताद् भवताम् ॥५९॥

कमलंकुरुते न दलत्कमलं
चरणं तव चारुतराऽऽचरणम् ।
परमापि यतो मुदमाप रमा
रमणीयगुणाप्यथ का रमणी ॥६०॥

द्रुतविलंबितम् ।

त्यजत रे विषयान् विषवत् सदा
भजत कांचनवंचनकृद्द्युतिम् ।
व्रजत रे शरणं चरणं हरेः
सृजत गौरपदे रतिमुज्ज्वलाम् ॥६१॥

कमलकोमलकोरकमालिकं
तिलकशोभित चारुसमालिकम् ।
वदननिर्जितफुल्लसरोरुहं
भजत गौरममंदशिरोरुहम् ॥६२॥

जय शचीजठराब्धिकलानिधे
जय मुकुन्द नवीनरसांबुधे ।
जय जय प्रणयेन दयानिधे
जय हरे जय केशव माधव ॥६३॥

भजनतोदितसर्वगुणालयं
भज नतोदितसर्वगुणालयम् ।
स्मरसुवर्णमहो दयया चितं
स्मर सुवर्णमहोदययाचितम् ॥६४॥

शालिनी ।

प्रेमांभोभिः स्नापितस्निग्धगण्डः
मन्दाकिन्या रोधसि स्वर्णवर्णः ।
नित्यानन्दस्कन्धविन्यस्तहस्तः
कोऽयं मातः संभ्रमाद् बंभ्रमीति ॥६५॥

आस्ते कोऽपि श्रीनवद्वीपमध्ये
भाग्यांभोधिः श्रीजगन्नाथमिश्रः ।
जातस्तस्माद् गौरचन्द्राभिधेयो
नित्यं लोकैर्यस्तुतः सोऽयमेव ॥६६॥

रथोद्धता ।

चारुचंचलविलोचनांचलः
प्रेमपूरपरिपूरिताननः ।

कुण्डलोल्लसितगण्डमण्डलः
कोऽपि भाति भुवि गौरचन्द्रमाः ॥६७॥

कुष्ठदूषितसमस्तविग्रहः
कोटिकीटदलितोऽपि मानुषः ।
प्राप्तदिव्यवपुरीक्षणात्तव
सादरं विशति नन्दनं वनम् ॥६८॥

गौरचन्द्रकरुणामहानदी
यावदेव भुवमाययौ सखे ।
तावदेव सुरवर्त्म संकुलं
वीक्ष्यते दिवि विमानवाहकैः ॥६९॥

केनचिन्नवरसस्पृशा दृशा
सादरं विकचसारसोपमा ।
पूर्वजन्मसुकृतेन वीक्ष्यते
गौरचन्द्रचरणांचलप्रभा ॥७०॥

इन्द्रवज्रा ।

दृष्टं न यैर्गौरपदारविन्दं
स्पृष्टं न तत्प्रेमसमस्तसारम् ।
हृष्टं मनो नैव च तत्कथायां
हा किं कृतं तैर्भुवि भाररूपैः ॥७१॥

उपजातिः ।

संसारसिन्धौ पतितं न पुत्रा
न बान्धवास्तारयितुं समर्थाः ।
दत्त्वा ततः स्वीयकरावलंबं
त्वमेव संतारय दीननाथ ॥७२॥

संसारसन्तापितचित्तपान्थ !
यथाकथंचित् शरणं गतोऽसि ।
श्रीगौरपादांबुरुहं ततोऽपि
चेद्गन्तुमिच्छास्ति महाननर्थः ॥७३॥

धन्यं नवद्वीपपुरं त्रिलोके
मन्दाकिनीमन्दतरंगरंगम् ।
यत्रावतीर्णो नवहेमगौरो
हरिर्हि भक्तिं प्रकटीचकार ॥७४॥

रसेन तुंगं मदमत्तभृगं
प्रमोदसंगं जुषतामनंगम् ।
लोलत्कुरंगं तनुतापभंगं
सुधातरंगं भज गौररंगम् ॥७५॥

स्रग्विणी ।

चालयन् योगिनां मानसं योगतो
लोलयँल्लीलया ब्रह्ममग्नं मनः ।
राजते या सदा प्रेमपूरोदरे
साऽवतु स्रग्विणी गौरमूर्तिर्हरेः ॥७६॥

शाक्तवादैर्महादुर्मदैर्मर्दिता
प्रोल्ललास क्षितौ भक्तिवल्ली यतः ।
मालयालंकृतश्चारुवक्षस्थले
क्रान्तचित्तः सदा स्यात्सगौरो हरिः ॥७७॥

सुन्दरी ।

चरणे तवषट्पदावली
भ्रमतो गुंजति पंकजावलेः ।

अभितो वदनं शशिभ्रमाद्
भ्रमते चारुचकोरमण्डली ॥७८॥

आर्या ।

चंचललोचनयुग्मं वदनं न हि हेमगौरवर्णस्य ।
किन्तु स्फीतसरोवरमुल्लसते मीनयुगलेन ॥७९॥

विलसति गौरो नृत्ये भक्तगणैर्मत्तमानसैः साकम् ।
भावैर्युक्तः प्रेमा सात्त्विकसंचारिभिः किमयम् ॥८०॥

वियोगिनी ।

हरिणीगणहारिलोचनो मदमत्तद्विपचारुविक्रमः ।
हरिचन्दनचर्चितः पुरो भुवि गौरांगहरिर्विलोक्यताम् ॥८१॥

स्वागता ।

मोहमत्तगजमर्दनसिंहः पापतापतिमिरक्षयसूर्यः ।
भक्तलोचनचकोरशशांकः कोऽपि मे मनसि तिष्ठतु गौरः ॥८२

दोधकम् ।

कांचनकेतकबन्धुरवर्णं
रत्नविनिर्मितकुण्डलकर्णम् ।
चिन्तय चित्त मनोमतिचौरं
जन्मनि जन्मनि जन्मनि गौरम् ॥८३॥

मत्ता ।

प्रेमांभोधेस्तरलतरंगैः
सांसारं या दहति च तापम् ।
चैतन्यस्यावसतु सदा मे
चित्ते मूर्तिर्हरिरसमत्ता ॥८४॥

पज्झटिका ।

विलसति गौरहरेर्यदि करुणा
मशका इव विधिशंकरवरुणाः ।
गौररसे यदि मज्जति चेतः
शुक्तिसमा किल मुक्तिस्तस्य ॥८५॥

मुरला ।

मधुरस्मितचारुकपोले कटिचुम्बितनीलनिचोले ।
रसकेलिमनोमणिचौरे रतिरस्तु सदा मम गौरे ॥८६॥

तूणकम् ।

त्वां हसन्ति बान्धवास्तदा हसन्तु निर्भरं
मत्तमामनन्ति चेत्तदा वदन्तु का क्षतिः ।
मित्र वांछसि प्रियं निजं परत्र तच्छृणु
हेमगौरपादपद्ममाश्रयं सदा कुरु ॥८७॥

द्विपथा ।

गौरचन्द्रचरणे रतिर्विलसति विशदा यस्य ।
प्रेमपूरपरिपूरितं नित्यं हृदयं तस्य ॥८८॥

भ्रमरविलसिता ।

मल्लीवल्लीभ्रमरविलसिता फुल्ला गेहं सुरभयति यथा ।
तद्वच्चित्तं सुखयतु सततं भक्तिर्गौरस्मरणरसयुता ॥८९॥

लीलाखेलम् ।

लीलांगीकृतरूपश्चैतन्यो रसभूपः
ज्ञात्वा पापरतं मां कर्ता नैव कृपां चेत् ।
हाहा त्यक्तसमस्तः पापे कर्मणि शस्तः
संसारे पदवीं कां यास्येऽहं गतशंकाम् ॥९०॥

लोला ।

योगाभ्यासकृतो ये खिन्नाः स्वान्तनिरोधात्
कर्मिष्ठा अपि दृष्टा नानोपायसकृष्टाः ।
लोला ये विषयेषु क्लिश्यन्ते किल तेऽपि
तस्मात्त्वं भज गौरं त्यक्त्वा सर्वमुपायम् ॥९१॥

चण्डी ।

जयति जगति तव माधव लीला
निजजनदुरितविदारणशीला ।
विमुखदनुजकुलनाशनचण्डी
सदयहृदयजनमानसहंसी ॥९२॥

मालती ।

अलिरिव पुष्पितमालतीलतां
हिमकिरणं च चकोरमण्डली ।
घनमिव चातकसंहतिर्यथा
तवपदमिच्छतु मामकं मनः ॥९३॥

रुचिरा ।

नरातुरामवतरति स्म माधवो
धरां यथा सुखयितुमद्भुतैर्गुणैः ।
तथैव किं प्रियसख भक्तिमुद्धरन्
शचीसुतो विमुखजनेन मर्दिताम् ॥९४॥

जलोद्धतगतिः ।

नमामि करिणीमनोज्ञगमनं
समस्त दुरितप्रमादशमनम् ।
शचीप्रियसुतं प्रसन्नहसितं
शशांकधवलं प्रमोदचपलम् ॥९५॥

त्वरितगतिः ।

त्वरितगती रतिरभसार्द्रचित्त नतिर्हरिचरणे ।
अवतु सदा प्रणयमुदा भजनपतिर्मम स गतिः ॥९६॥

हंसी ।

क्रीडां कुर्यात् श्रीचैतन्यप्रणयसरसि मम मतिरिव हंसी
अन्यद्वादं त्यक्त्वा वाणी रसयतु तदमलगुणगणगाथाम् ।
संसारेऽस्मिन्नान्या वार्ताः श्रवणयुगलमपि मम कलयन्तु
प्रेमोन्मत्तः सोऽयं गौरो नटतु मनसि मम सह निजभक्तैः ॥

मदिरा ।

माधवभक्तमनः सरसांबुजसंहतिजागरणप्रथितः
तर्कविदूषितलोचनमूकितदुर्जनघूकनिराशकरः ।
स्वीयपदाम्बुजसेवकमानसपापतमिस्रविनाशकरो
राजति गौरहरिर्भुवने रमणीयरुचिः प्रकटस्तरणिः ॥९८॥

निरोष्ठसोरठा ।

भ्रमारंभेण रहितो नतरंगविधायकः ।
अजडात्मातिमधुरः अपूर्वोऽयं रसार्णवः ॥९९॥

मुक्ताविर्भावितगुणो धीवरैरवगाहितः ।
नवद्वीपानन्ददायी गौरोऽयं सागरायते ॥१००॥

दयानिधिः किल येन श्रीचैतन्यश्चिन्तितः ।
दत्तश्चरणस्तेन कृष्णकेलिरससागरे ॥१०१॥

सर्वतोभद्रः ।

वंदे दंभिभिदं देवं संगताजिजितागसं ।
रंगासाररसागारं मंगलाच्छच्छलागमं ॥१०२॥

षोडषदलकमलबन्धोऽयम् ।

नीरजारण्यरम्योरस्सारभारहरस्मर ।
भर गौर दरस्मेर हीरहार परज्वर ॥१०३॥

गोमूत्रिकाबन्धोऽयम् ।

गौरं भजत रे मूढत्राणदं चिरसंभृताम् ।
दूरं त्यजत रे गूढवासनां चित्तसंगताम् ॥१०४॥

इति श्रीनन्दकिशोरगोस्वामि-विरचितं
श्रीगौरप्रेमोल्लासस्तोत्रं समाप्तम् ।

# श्रीगौराङ्गप्रत्यङ्गवर्णनाख्यस्तवराजः ।

अथ स्तोत्रं प्रवक्ष्यामि प्रत्यङ्ग-वर्णनं प्रभोः ।
त्रिकाल-पठनादेव प्रेमभक्तिं लभेन्नरः ॥ १ ॥

कश्चित् श्रीकृष्णचैतन्य-स्मरणाकुल-मानसः ।
पुलकाचित-सर्वाङ्गः सकम्पाश्रुविलोचनः ॥ २ ॥

कथञ्चित् स्थैर्यमालम्ब्य प्रणम्य गुरुमादरात् ।
स्तोतुमारब्धवान् भक्त्या द्विजचन्द्रं महाप्रभुम् ॥ ३ ॥

तप्तहेमद्युतिं वन्दे कलिकृष्णं जगद्गुरुम् ।
चारु-दीर्घ-तनुं श्रीमच्छचीहृदय-नन्दनम् ॥ ४ ॥

लसन्मुक्तालता-नद्ध-चारु-कुञ्चित-कुन्तलम् ।
शिखण्डाङ्कित-गन्धाढ्यं पुष्प-गुच्छावतंसकम् ॥ ५ ॥

अर्धचन्द्रोल्लसद्भाल-कस्तूरी-तिलकाङ्कितम् ।
भंगुर-भ्रूलता-केलि-जित-कामशरासनम् ॥ ६ ॥

प्रेमप्रवाह–मधुर–रक्तोत्पल–विलोचनम् ।
तिल–प्रसून–सुस्निग्ध–नूतनायत–नासिकम् ॥ ७ ॥

श्रीगण्डमण्डलोल्लासि–रत्नकुण्डल–मण्डितम् ।
सव्यकर्ण–सुविन्यस्त–स्फुरच्चारु–शिखण्डकम् ॥ ८ ॥

मधुरस्नेह–सुस्निग्ध–प्रारक्ताधर–पल्लवम् ।
ईषदन्तुरित–स्निग्ध–स्फुरन्मुक्ता–रदोज्ज्वलम् ॥ ९ ॥

सप्रेम–मधुरालाप–वशीकृत–जगज्जनम् ।
त्रिकोण–चिबुकं कोटि–शारदेन्दु–प्रभाननम् ॥१०॥

सिंहग्रीवं महामत्त–द्विरदोल्लासि–कन्धरम् ।
आरक्त–रेखात्रययुक्–कम्बुकण्ठ–मनोहरम् ॥११॥

मुक्ता–प्रवाल–कलित–हारोज्ज्वलित–वक्षसम् ।
कङ्कणाङ्गद–विद्योति–जानुलम्बि–भुजद्वयम् ॥१२॥

यव–चक्राङ्कितारक्त–श्रीमत्–पाणितलोज्ज्वलम् ।
स्वर्णमुद्रा–लसच्छ्रीमद्द्विमध्याङ्गुलि–पल्लवम् ॥१३॥

चन्दनागुरु–सुस्निग्धं पुलकावलि–चर्चितम् ।
चारुनाभि–लसन्मध्यं सिंह–मध्य–कृशोदरम् ॥१४॥

विचित्र–चित्र–वसन–मध्य–बद्धोल्लसत्–कटिम् ।
सुचारु–नूपुरोल्लासि–कूजच्चरण–पल्लवम् ॥१५॥

शरच्चन्द्र–प्रतीकाश–नख–राजत्–पदांगुलिम् ।
अंकुश–ध्वज–वज्राब्ज–विलसच्चरणाम्बुजम् ॥१६॥

कोटिसूर्य–प्रतीकाश–कोटीन्दु–ललित–द्युतिम् ।
कोटि–कन्दर्प–लावण्य–केलि–लीला–मनोरमम् ॥१७॥

साक्षाल्लीलातनुं केलितनुं शृङ्गार-विग्रहम् ।
क्वचिद्भाव-कला-मूर्ति-प्रस्फुरत्-प्रेमविग्रहम् ॥१८॥

नामात्मकं नामतनुं परमानन्द-विग्रहम् ।
भक्त्यात्मकं भक्तितनुं भक्त्याचार-विहारिणम् ॥१९॥

अशेष-केलि-लावण्य-लीला-ताण्डव-पण्डितम् ।
शची-जठर-रत्नाब्धि-समुद्भूतं-सुधानिधिम ॥२०॥

अशेष-जगदानन्द-कन्दमद्भुत-मङ्गलम् ।
स्फुरद्रास-रसावेश-मदालस-विलोचनम् ॥२१॥

क्वचिद्भक्तजनैर्दिव्य-माल्य-गन्धानुलेपनैः ।
वेष्टितं रससङ्गीतं गायद्भी रसलालसम् ॥२२॥

क्वचिद् बाल्यरसावेश-गङ्गातीरे-विहारिणम् ।
क्वचिद्धायति गायन्तं नृत्यन्तं करशब्दितैः ॥२३॥

वदन्तं शब्दमत्युच्चैः कुर्वन्तं सिंहविक्रमम् ।
क्वचिदास्फोट-हुङ्कार-कम्पिताशेष-भूतलम् ॥२४॥

सुगुप्त-गोपिकाभाव-प्रकाशित-जगत्त्रयम ।
प्रापिताशेष-पुरुष-स्त्री-स्वभावमनाकुलम ॥२५॥

निज-भाव-रसास्वाद-विवशैकादशेन्द्रियम् ।
विदग्ध-नागरी-भाव-कला-केलि-मनोरमम् ॥२६॥

गदाधर-प्रेमभाव-कलाक्रान्त-मनोरथम ।
नरहरि-प्रेमरसास्वाद-विह्वल-मानसम् ॥२७॥

सर्व-भागवताहूत-कान्ताभाव-प्रकाशकम् ।
प्रेमप्रदान-ललित-द्विभुजं भक्तवत्सलम् ॥२८॥

प्रेमाराध्य-पदद्वन्द्वं श्रीप्रेमभक्ति-मन्दिरम् ।
निज-भावरसोल्लास-मुग्धीकृत-जगत्त्रयम् ॥२९॥

स्वनाम-जपसंख्याभिर्वैष्णवीकृत-भूतलम् ।
नवद्वीप-जनानन्दं भूदेव-जन-मङ्गलम् ॥३०॥

अशेष-जीव-सद्भाग्य-क्रम-सम्भूत-सत्फलम् ।
भयानुराग-सुस्नेह-भक्ति-गम्य-पदाम्बुजम् ॥३१॥

नटराज-शिरोरत्नं श्रीनागर-शिरोमणिम् ।
अशेष-रसिक-स्फूर्यन्मौलि-भूषण-भूषणम् ॥३२॥

रसिकानुगत-स्निग्ध-वदनाब्ज-मधुव्रतम् ।
श्रीमद्द्विजकुलोत्तंसं नवद्वीप-विभूषणम् ॥३३॥

प्रेमभक्तिरसोन्मत्ताद्वैत-सेव्य-पदाम्बुजम् ।
नित्यानन्द-प्रियतमं सर्वभक्त-मनोरथम् ॥३४॥

भक्ताराध्यं भक्तिसाध्यं भक्तरूपिणमीश्वरम् ।
श्रीनिवासादिभक्ताग्रैः स्तूयमानं मुहुर्मुहुः ।
सार्वभौमादिभिर्वेदशास्त्रागम-विशारदैः ॥३५॥

य एवं चिन्तयेद्देवदेवेशं प्रयतोऽनिशम् ।
संस्तौति भक्तिभावेन त्रिसन्ध्यं नित्यमेव च ॥३६॥

धर्मार्थी लभते धर्मं श्रीभागवतमुत्तमम् ।
अर्थार्थी लभते चार्थं कृष्णसेवाविधौ रतिम् ॥३७॥

कामार्थी लभते कामं प्रेमभक्ति-विधानतः ।
संसार-वासना-मुक्ति मोक्षार्थी विगत-स्पृहः ॥३८॥

विद्यार्थी लभते विद्यां कामसंसारकृन्तनीम् ।
काव्यार्थी कविताशक्तिं कृष्णवर्णनशालिनीम् ॥३९॥

अपुत्रो वैष्णवं पुत्रं लभते लोकबन्धुताम् ।
आश्रयार्थी लभेच्छान्तं श्रीमद्भागवतं गुरुम् ॥४०॥

श्रीमच्छ्रीकृष्णचैतन्य-पदाम्बुज-युगे भृशम् ।
प्रेमानुराग-ललितां प्रेमभक्तिं लभेन्नरः ॥४१॥

इति श्रीलावधूताभिन्न-श्रीमदद्वैताचार्यप्रभु-विरचितः
श्रीगौराङ्गप्रत्यङ्गवर्णनाख्यस्तवराजः समाप्तः ।

## श्रीनवद्वीपचन्द्रस्तवराजः ।

कनक-रुचिर-गौरः सर्व-चित्तैक-चौरः
प्रकृति-मधुर-देहः पूर्ण-लावण्य-गेहः ।
कलित-ललित-रूपः क्षुब्ध-कन्दर्प-भूपः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ १ ॥

बहुल-चिकुर-बन्धः स्निग्ध-मुग्ध-प्रबन्धः
प्रसर-पुर-पुरन्ध्री-चित्त-सन्धान-मंत्री ।
विहित-विविध-वेश-द्योतिताशेष-देशः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ २ ॥

विकशित-शतपत्र-द्योति-विस्फारनेत्रः
प्रिय-मृदुल-पवित्र-स्निग्धदृक्-प्रेमपात्रः ।
अति-मधुर-चरित्रः प्रोल्लसच्चारु-गात्रः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ३ ॥

मलयज–करवीरश्चिद्विलासाति–धीरः
सुविमल–स्मितवक्त्रः प्रान्तवल्लानुरक्तः ।
रभसमय–विहारः पूर्णलीलावतारः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ४ ॥

सकल–रस–विदग्धः सर्वभार–प्रशुद्धः
सकल–सुख–विनोदः ख्यात–नृत्य–प्रमोदः ।
सकल–सुखद–नामा धन्य–तारुण्य–धामा
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ५ ॥

अविरत–गलदस्रः प्रेमधारा–सहस्र-
स्नपित–सकल–देशः ख्यात–नामोपदेशः ।
भुवन–विदित–सर्व–प्राणि–निस्तार–गर्वः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ६ ॥

घन–पुलक–कदम्बः स्थूल–मुक्ता–समाम्भः
स्नपिततर–हृदोरः प्रेम–हुङ्कार–घोरः ।
सदय–मधुर–मूर्तिर्विश्व–विख्यात–कीर्तिः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ७ ॥

अखिल–भुवन–भर्ता दुर्गति–त्राण–कर्ता
कलि–कलुष–निहन्ता दीन–दुःखैक–शान्ता ।
निरवधि–निजगाथा–कीर्तनानन्द–दाता
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ८ ॥

सुर–मुनिगण–बन्धुः प्रेमभक्त्येक–सिन्धुः
प्रकट–सुरभि–नन्द–श्रीलपादारविन्दः ।
नटन–मधुर–मन्दः सुप्रगाढ–प्रबन्धः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥ ९ ॥

सकल-निगम-सारः प्रेम-पूर्णावतारः
प्रचुर-गुण-गभीरः सर्व-सन्धान-धीरः ।
अधम-पतित-बन्धुः पूर्ण-कारुण्य-सिन्धुः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥१०॥

मधुरिमणि मनोज्ञस्ताण्डवाद्यन्त-विज्ञ-
स्तरुणिमणि विचित्रः प्रेम-निस्तार-पात्रः ।
महिमनि निजनाम-ग्राहि-सम्पूर्ण-कामः
स्फुरतु हृदि नटेन्द्रः श्रीनवद्वीपचन्द्रः ॥११॥

श्रीगौराङ्ग-नटेन्द्रस्य स्तुतिमेतामभीष्टदाम् ।
यः पठेत् परमप्रीतः स प्रेमसुखभाग् भवेत् ॥१२॥

इति श्रीमद्रघुनन्दन-ठक्कुर-विरचितः
श्रीनवद्वीपचन्द्रस्तवराजः समाप्तः ।

# श्रीगौरप्रेमस्तवराजः ।

अनुभवगम्यमलौकिकमागमनिगमैकप्रतिपाद्यम् ।
सर्वसमर्थममन्दं निखिलानन्दं महाप्रभुं स्तौमि ॥ १ ॥

यद्रूपं कलिमलतो विद्वद्विषयं परं तत्त्वम् ।
परमानन्दमुकुन्दः प्रादुरभूत्तत्प्रकाशनायैव ॥ २ ॥

साक्षादवतरति श्रीगौरहरौ कृष्णचैतन्ये ।
दुर्गममपि खलु सुगमं सर्वं तत्रापि तत्कृपया ॥ ३ ॥

इति संविविच्य हृदये नाम्नामष्टोत्तरं शतकम् ।
निखिलाघसंघहारि श्रीचैतन्यस्य वक्ष्यामि ॥ ४ ॥

ऋषिः शचीकुमारस्तु नाम्नां छन्दो जगत्यसौ ।
राधामाधवदेवोऽस्य बीजं वृन्दावनस्थितिः ॥ ५ ॥

विनियोगः प्रेमयोगः प्रतिबन्धनिवारणे ।
श्रीकृष्णाधरपीयूषस्वादसिद्धिर्नसंशयः ॥ ६ ॥

प्रेमा प्रेमप्रदाता श्रीशचीसूनुः कृपानिधिः ।
जगन्नाथात्मजो विश्वरूपबन्धुर्व्रजेश्वरः ॥ ७ ॥

नवद्वीपोद्भवो भर्ता भगवान् भुवनेश्वरः ।
नीलांबरसुताकुक्षिसिन्धूद्भवकलानिधिः ॥ ८ ॥

निमाइपण्डितश्रेष्ठः सर्ववेदप्रकाशकः ।
लक्ष्मीकान्तो गुणानन्तो गंगादासगुरूत्तमः ॥ ९ ॥

सार्वभौमचमत्कर्ता गोपीनाथादिमोहकः ।
श्रीवासहृदयानन्दी श्रीमदीश्वरसेवकः ॥१०॥

अद्वैतगुणसंपन्नः शरणागतवत्सलः ।
विष्णुप्रियापतिर्नित्यानन्दषड्भुजदर्शकः ॥११॥

नामरूपप्रकाशात्मा लीलाधामधरो हरिः ।
जगदानन्दस्योत्कर्षी मुरारिमनसि स्थितः ॥१२॥

श्रीधरोद्धारकः श्रेयो दिग्विजेतृपरास्तकृत् ।
काशीतपनयोः स्वामी शिवानन्दसुतप्रियः ॥१३॥

वृन्दावनरसांभोधिर्व्रजरूपप्रकाशकः ।
चतुर्दिक्षुकृपावर्षी रत्नं गोवर्धनस्य च ॥१४॥

इन्द्रादिसर्वलोकेशवन्दितश्रीपदांबुजः ।
राधाकुण्डकृष्णकुण्डलीलाललितविग्रहः ॥१५॥

वृन्दावननिकुंजस्थस्वरूपानन्दसत्पतिः ।
श्रीभागवतगूढार्थो गोकुलानन्ददायकः ॥१६॥

परमानन्द आनन्दः कोटिकन्दर्पसुन्दरः ।
प्रबोधानन्दसेव्यः श्रीरघुनाथप्रमोदकः ॥१७॥

संन्यासपावनः शान्तः सर्ववादिविनोदकृत् ।
दयालुर्दीननाथश्च दुष्टदौर्जन्यदाहकः ॥१८॥

सत्प्रतापो विशुद्धोत्कभक्तिसर्वस्वसंभृतः ।
श्रीनिवाससदानन्दी विश्वमूर्तिर्महाप्रभुः ॥१९॥

सनातनस्वरूपस्थो जीवरूपप्रकाशकः ।
रघुनाथरसोत्कर्षस्तद्वृन्दावनप्रेषकः ॥२०॥

गोपालभट्टगोपालश्चन्द्रगोपालपूजितः ।
हरिदासहृदुल्लासी कीर्तनोन्मुखकारकः ॥२१॥

महाप्रेमरसोन्मत्तो गोपीलीलाप्रकाशकः ।
वैष्णवप्राणबन्धुः श्रीजगन्नाथरथाग्रगः ॥२२॥

प्रतापरुद्रसंत्राता रामानन्दरसायनः ।
गौरीदासनिकेतस्थो वक्रेश्वरहृदिस्थितः ॥२३॥

गीतगोविन्दरसधीर्जयदेवगुणोत्सुकः ।
प्रेमदानपरीतात्मा श्रीराधारमणः स्वयम् ॥२४॥

यवनोद्धारहृद्धारी भक्तिसंपत्प्रदायकः ।
कृष्णकर्णामृतश्रोता कर्णपूरगिरांपतिः ॥२५॥

गोविन्दपार्षदो वेद्यः स्वरूपमधुराकृतिः ।
पंचतत्त्वात्मको विष्णुर्गदाधरदयाधरः ॥२६॥

अदेयदायकः कृष्णः कृष्णचैतन्यनामकः ।
राधाभावरसांभोधिर्विरहानुभवार्थधीः ॥२७॥

स्त्रीशूद्रोद्धारसुगमः पात्रापात्रकृपामयः ।
शिक्षाष्टकप्रवक्ता श्रीमाधवेन्द्रपदाश्रितः ॥२८॥

तुलसीमिश्रचरणः श्रीकान्तप्रतिपूजितः ।
चन्दनेश्वरसिद्धान्तो दामोदरदरस्मितः ॥२९॥

त्रैलोक्यमोहनो दिव्यमाधुर्यपरिपूरितः ।
रासभावैकसंसेव्यो रामरायप्रियो रसः ॥३०॥

इति श्रीकृष्णचैतन्यनाम्नामष्टोत्तरं शतम् ।
तदीयगरिमौदार्यभृतं सर्वस्वसंस्थितम् ॥३१॥

श्रीमन्नित्यानन्ददेवकृपापात्रोऽकरोदिदम् ।
जयदेवकुलोद्भूतो रामराय इति स्मृतः ॥३२॥

प्रेम्णा विशुद्धबुद्धिर्यः पठत्यनुदिनं जनः ।
स तदेकमनाः सिद्धिं दुर्लभां लभते स्वयम् ॥३३॥

तदप्राप्तौ वृथामुक्तिस्तदाप्तौ तद्गतार्थता ।
मधुरोत्तमसत्स्तोत्रं जप्यं गौररसार्थिभिः ॥३४॥

भवेऽस्मिन् भव्यं मेऽभवदमितसंसिद्धिनिहितं
परं गौरस्तोत्रं यदिहकृतवाँस्तस्य कृपया ।
अभेदं संपश्यन् मुरभिदि च तन्नाम्नि नितरां
शचीसुनुः साक्षात् प्रकटवपुषायं विलसति ॥३५॥

इति श्रीरामराय–गोस्वामि–प्रणीतं
श्रीगौरप्रेमस्तवराजः समाप्तम् ।